कल्याणमात्रं जगतः परं सत् स्वीयं तथा मंगलमेव धृत्वा।
आत्मप्रसादादविभिन्नता न्चाऽन्येभ्यो नरेभ्योऽप्युपयाति सैषा।८४।
कल्याणमात्रार्थ–परा नराणां सा निर्विशेषा त्वविशेषपात्रा।
सर्वत्र लोकोपकृतार्थसत्ता स्वार्थादभिन्नं त्वपरार्थमेति।८५।
स्वार्थस्य चिन्ता महतः परापि सामान्यलोकोन्नति–चेष्टमाना।
विस्तारमेता भुवि मानवार्था प्रत्येकलोकस्य हित करोति।८६।
व्यक्ते विशिष्टाद्य-हितोपकारे सवस्य कल्याण–विचिन्तनेन।
प्रत्येक–कल्याणमपि प्रभाति नो विस्मयार्होऽस्त्विवति चाऽविरोधः।८७।
सोऽयं प्रकर्षः नर-साम्य-बुद्धेः सर्वात्म-चित्तत्वमिहादधानः।
सर्वार्थ–कल्याण–विभावनात्मो धत्ते नरेष्वेव परार्थवत्ताम्।८८।

विधिमूल उपायोऽत्र लोकहिते सतां मतः।
योगात्मकोऽनिषेधोऽथ सूत्राभ्यां स विधीयते।८९।
ईप्साया विषय स्त्वत्र विवेक–संस्कृतश्रिया:।
यथार्थं साधनीयत्वं सर्वथालोच्यते ततः।९०।



---

अपनी आत्मा को भी उत्कृष्ट बनाती है और साथ ही परार्थ की साधक होती वही श्रेष्ठ है। संसार के कल्याण में ही अपना कल्याण मानता हुआ नर अन्यों में विविधता के रूप मे जगत–कल्याण को देखता है। निर्विशेष व अविशेष रूप से जगत-कल्याण ही लोगों के आत्म-कल्याण भी बनाते हैं और स्वार्थ व परार्थ में अभेद दर्शाते हैं। (८२–८५)

महान् स्वार्थ की चिन्ता सामान्य लोकहित–कर व व्यापक होकर प्रत्येक का हित करती है। व्यक्ति का कल्याण सब के कल्याण के चिन्तन में समाहित हो जाता है। इसमें कोई विस्मय नहीं, विरोध भी नहीं है। वैसा विचार समस्त लोककल्याण की भावना को उत्पन्न करता हुआ परार्थ–साधक हो जाता है।

विधिमूलक उपाय ही विचारशील मानवों को रुचते हैं। योगात्मक व अनिषेधात्मक उपाय को आगे के दो सूत्र प्रस्तुत करते हैं। विवेकाश्रित शुद्ध इच्छा का विषय ही यथार्थ करणीय है इसकी चर्चा उपस्थित है। (८६–९०)

सू० । ईप्सिताऽप्यनुसंसाध्या ।।१९।।

प्र० सा येप्सितेत्थं सुविचारमान्या सर्वैर्नरैश्चानुविमन्यतां वै ।
सद्बुद्धि–युक्तिभ्य इहाश्रितव्या प्रेमाश्रितैः सद्व्यवहारनिष्ठैः ।६१।
नित्येप्सिता सा प्रकृते स्तु शान्तिः संसाध्यतां यत्नत एव नृणाम् ।
भावात्मकैः सर्वसुसाधनैर्वा आकारिता स्याज् जगदेकधात्री ।६२।

कथं तत्सिद्धता चात्र लोकैः पूर्णतयाप्यते ।
विस्तारं वक्ष्यमानं तद् अग्रतः सूत्र्यते पुनः ।६३।

सू०। मनो-वाग्-बुद्धि-कर्मभिः ।।२०।।

प्र० सर्वप्रकारेण मनोबलेन सत्साहसेनापि वचः-कृतैश्च ।
कायेन बोधैरुचितैरुपायैः संसाधितव्येह यथार्थशान्तिः ।६४।



---

सू० जो ईप्सित (चरमलक्ष्य) उसे सिद्ध (वास्तव में कायम) करना चाहिए ।

प्र० जो इस प्रकार ईप्सित व विचारमान्य है सभी नर, युक्ति व दृढनिश्चय के साथ सद् व्यवहार द्वारा उसका आश्रय करे । प्रकृति का ही तकाजा यह है कि लोग शान्ति को चाहे, अतः उसे स्थापित करने के लिए वे सदैव चेष्टावान् रहे और प्रयासों से उसे संसार में साकार व सार्थक करे क्योंकि वही (शान्ति) जगत् को एकमात्र स्थिर रखनेवाली है ।

उसकी सिद्धि कैसे मनुष्य प्राप्त कर सकते हैं इसी आशय को विस्तार से स्पष्ट करता हुआ सूत्र अब प्रस्तुत होता है । (६१–६३)

सू० मन, बुद्धि, वाक्य व कर्म के द्वारा (प्रयास करना चाहिए) ।

प्र० सभी प्रकार मनोबल, सत्साहस, वचन, कर्म, शरीर व बुद्धि एवं योग्य उपायों से शान्ति की सिद्धि की जाये । शक्ति के दुरुपयोग को मिटाकर

शक्तेरपन्यासमपास्य विज्ञः साधुं सदर्थं ह्युपयोगमिच्छेत् ।
शान्ते विधाने स्वत एव सार्था शक्तिर्भवेच्छक्ति रुपप्रयुक्ता ।९५।
शक्तिः पराप्ता तु नरैः कदाचिन् नैव प्रयोज्या परपीडनेषु ।
सर्वोपकाराय निवेदितव्या सा सार्थका युक्त-नियुक्ततायाः ।९६।
सर्वैं र्बलै र्लोक इहान्ययोगै र्बोधै रुपायैरपि भावपुञ्जैः ।
वाक्-काय-चारैः सततं स्वशक्तिं संसेवमानोऽस्तु नरोपकारे ।९७।

[साधन-विशेषाधिकरणम्]

सामान्य-साधनं ह्युक्त्वा तदेवात्र विशेषतः ।
विस्तारेण प्रकाशाय स्पष्टतः सूत्र्यते पुनः ।९८।

सू० । परार्थ-परता प्रेम ।।२२।।

विस्तारितात्मन्यथ मानवे तज् जायेत नित्यं त्वपरार्थचिन्ता ।
स्वार्थं परार्थेऽप्यविभिन्नतां यत् सोदारदृष्टेरिह मन्यतां वै ।९९।
इत्थं समुत्कृष्ट-परार्थ-सत्त्वे तन्मानसेऽप्यत्र सुसंस्कृतेऽतः ।
लोकस्य जायेत परा ह्यभीतिः प्रेम स्वयं सर्वजने च सार्थम् ।१००।

---

नर-हित में उसका प्रयोग हो । सत्प्रयोग से ही शक्ति सार्थक शक्ति कहलाती है । शक्ति को सदैव परोपकार के लिए लगाया जाये कदापि परपीडन के लिए नहीं । सभी मनुष्यों को समस्त बल, बुद्धि और भावात्मक उपाय एवं वचन व व्यवहारों से सदैव शक्ति का प्रयोग लोकोपकार के निमित्त करना चाहिए । (९४-९७)

सामान्य साधन की चर्चा के बाद विशेष रूप से विस्तार से साधनों का प्रस्ताव किया जाता है ।

सू० परार्थ की लगन एवं सब मनुष्यों में सच्चा प्रेम रखने चाहिए ।

प्र० मन का विस्तार होने पर मानवों में परार्थ की चिन्ता स्वतः उत्पन्न होती है । और परार्थ में ही उदारतावाले लोगों को स्वार्थ भी अभिन्न रूप से वर्तमान दिखाई देता है । इस प्रकार उत्कृष्ट व सुसंस्कृत मन वाले लोगों में

प्रेम्णा बिधार्येत नरः पृथिव्यां प्रेम्णा निवार्येत लय-प्रणाशः।
प्रेम्णा सुवध्येत परात्मयोगः प्रेम्णैव विश्व-स्थितिरर्ज्यतां वै ।१०१।
आत्मप्रतिष्ठाऽस्तु परार्थवत्त्वे स्वात्मप्रसाराद्युपपाद्यसत्ता ।
तत्त्वैकदृष्ट्या परिसार्थकत्वम् आत्मार्थ-सर्वार्थ-समत्वकस्य ।१०२।

समिष्टिहितचिन्तायां व्यष्ट्यौन्नत्यं स्वतो भवेत् ।
परार्थ-कर्म-चिन्तातो विश्वात्मबोध आप्यते ।१०३।

सू० चेष्टा-विश्वोत्प्रकर्षिका ॥२२॥

प्रे० विश्वस्य लोक-स्वमनःसरित्सु सर्वोपकारात्मक-शुद्धसत्त्वम् ।
दीप्तं सिताब्जं प्रतिभानुफुल्लं जायेत वर्ध्येत सुसौरभं स्वम् ।१०४।
विश्वोपकार-प्रणियोग-चित्तः सर्वोन्नतेश्चिन्तनमानयेन्ना ।
तस्यैव सेवामनुवर्तमानः प्राप्नोति कल्याण-समष्टिमेव ।१०५।

---

भय-शून्य प्रेम उत्पन्न होता है। प्रेम से मनुष्य संसार में धृत होते हैं। प्रेम से भय व विनाश निवारित होते हैं। प्रेम से परहित की रुचि बनती है, प्रेम से ही जगत् की स्थायी स्थिति अर्जित होती है। परार्थकारी व्यक्तियों में आत्मप्रतिष्ठा होती जो आत्मप्रसार को बढ़ाकर एकात्मक-बोध उत्पन्न कराती है। तात्त्विक एकता की दृष्टि से ही आत्मार्थ व सेवार्थ में समानता के बोध को सार्थक माना जाता है। (६८-१०२)

समष्टि की हित-चिन्ता में व्यष्टि की उन्नति स्वत-ही होती है। अतः परार्थ-कर्म की चेष्टा में विश्वात्मबोध पाया जाता है। (१०३)

सू० विश्व-प्रकर्ष-मूलक चेष्टा करनी चाहिए।

प्रे० मनुष्यों के मन रूपी सरोवर में सर्वोपकारात्मक शुद्ध व दीप्त प्रतिभा से खिला हुआ श्वेत कमल उत्पन्न होता है। विश्वहित को मन में धारण करते हुए मनुष्य उसके अनुकूल प्रयोग द्वारा कल्याण करे। विश्वोन्नति ही काम्य है तच्चित्त होकर उसी के लिए यत्नवान् रहे। सामान्य रूप से लोक

विश्वोन्नति वैं नृकाम्य-तत्त्वं संचेष्ट्यतां चाप्यनुसारतश्च ।
तच्चित्तता गौरवपात्रमग्र्यं संजयन्तां लोकमनःसु भूयः ।१०६।
सामान्यतो लोकहिते यथार्थे प्रत्येकलोकस्य हितं निषण्णम् ।
सर्वोपकारे विहिते नराणां व्यक्तेर्हितं च स्वत आप्यते तैः ।१०७।
भावरूपा उपाया स्तु के चात्र शान्तिसाधकाः ।
उत्कर्षविषया नॄणामतः सूत्रैः प्रकीर्तिताः ।१०८।

सू० नरेषु नृत्वबोधःस्यात् ।।२३।।

प्रे० बोधो मनुष्येषु मनुष्यतात्मा संजन्यतां चापि विवर्ध्यतां सः ।
सामान्यधर्मात्मक एव वेदः श्रेयान् विशेषात्मक-भेद-बोधात् ।१०९।
नास्त्यत्र भेदो हि यथार्थबुद्धे र्लोकेऽस्ति लोकत्व-समत्वमैक्यम् ।
धृत्वेति नित्य भव-वेद-सारं स स्यात् समन्तान्नर आप्तकामः ।११०।
यत्रैव पूज्येत नरो नरै स्तैः कामार्थ-धर्मा स्तत एव सिद्धाः ।
शान्ति-स्वरूपां नर एति मुक्तिं प्रीतो गणेशो गणसेवयाऽस्तु ।१११।
सद्भावनां चेह नरेषु भूयो धृत्वा नरा स्त्वात्त-नरत्वरूपाम् ।
अन्योन्य-कृत्यैरविलिप्यमाना नित्यं विभान्त्येवमुपात्त-सत्ताः ।११२।

---

हित में ही प्रत्येक का हित सिद्ध होता है । सभी के उपकार किये जाने पर व्यक्ति का भी उपकार सिद्ध होता है । भावरूप उपाय क्या-क्या है जो शान्ति के उपयुक्त साधक हैं । ये उक्त होते हैं । (१०४—१०६)

सू० मनुष्यों में मनुष्यता—बोध हो ।

मनुष्यों में मनुष्यता का दृढ बोध हो एवं निरन्तर बढ़ता रहे । यह सामान्य धर्मात्मक बोध विशेष व भेदमूलक बोध से श्रेष्ठ है । यथार्थ बुद्धि के सामने भेद का अस्तित्व ही नहीं रहता है । यही श्रेष्ठ व सार्थक ज्ञान प्राप्त करके मानव पूर्ण काम हो सकते हैं । जहां नरों की नरों द्वारा सही ढंग से पूजा होती है वहां धर्म, अर्थ व काम स्वय ही सिद्ध हो जाते हैं । और अन्त में गण-सेवा से ही गण-देवको शान्ति—स्वरूप मुक्ति प्राप्त हो सकती है ।

मनुष्य मनुष्यतामय सद्भावना को दृढ़ता के साथ धारण करते हुए परस्पर के कार्यों के द्वारा अभिभूत न होते हुए सदैव अपनी स्वरूप-सत्ता को अनुभव करके खुश होंगे । (१०७ ११२)

## सू० आत्मवल्लोक-चिन्तनम् ।।२४।।

प्रे० प्रत्येक-लोकः पर-सेवमानः स्वात्म-प्रसारात्त-परात्मबोधः।
सर्वान् नरानेव समत्वदृष्ट्या सम्यग् ह्यु पास्तामनुचिन्तयन् तत् ।११३।
स्वात्मैक्यबोधः सकलेषु नित्यं सर्वैः सहाप्यस्तु नरै नरेषु।
स साध्यतां चात्म-मनः–क्रियासु सर्वात्मताधीरिति वै प्रबोधः ।११४।

## सू० सर्व–मानव -सेवैव ।।२५।।

प्रे० सेवैव धर्मो भुवि मानवानां सा मानवैश्चात्र सुसाध्यतां वै।
तस्यां कृतायां स्वत आत्मसेवा प्रत्येक-लोकस्य च कार्यतेऽतः ।११५।
सर्वस्य सेवा नर-मुख्यकृत्यं धर्मार्थ-सारं नय-शास्त्र-मानात्।
सर्वात्मतायाः कृतमात्मकर्म सर्वस्य सेवामनिशं दधाति ।११६।
योऽभेद-बुद्ध्याऽऽचरतीह सेवां सर्वस्य लोकस्य च सत्यनिष्ठः।
श्रेयांसमेवैव चरन् स धर्मं सार्थक्यवानस्तु सतां वरिष्ठः।११७।
यो लोक–सेवां सततं चरन् वै श्रद्धात्मचित्तोर्ऽपित-सर्व-सत्त्वः।
सम्यक् स ईशं भजतीह नित्यं धर्मात्मनामत्र भवन् वरेण्यः ।११८।

---

सू० समस्त मानव की सेवा हो।

प्रे० सेवा ही मुख्य धर्म है। अतः उसकी सिद्धि में निष्ठा रखे। मन वचन व कर्मों द्वारा उसका पालन करें व अपनायें। सभी की सेवा में ही आत्म-सेवा होती है। सभी की सेवा ही समस्त धर्मों का सार है। अतः जन-सेवा सभी का कर्तव्य है। अथवा नर सर्वात्मक हो अपनी सेवा करे उससे भी सभी की सेवा हो जाती है। (११३—११६)

प्रे० जो नर अभेदबुद्धि से सब नर की सेवा में सच्चाई के साथ लगे रहे वह श्रेष्ठ धर्म का पालन करता हुआ वन्दनीय होता है। जो श्रद्धा के साथ अपने सर्वस्व अर्पित करके जनसेवा करता है वही धार्मिक लोगों में श्रेष्ठ है। (११७—११८)

सू० पर-स्वातन्त्र्य-रक्षणम् ॥२६॥

प्रे० सोपासना वै भुवि लोक-सेवा सैवात्र धर्माश्रित-नीति-सारः।
याऽस्ति स्वतो लोकगणात्मकेन्द्रा सैवेशकेन्द्रास्वपि जातु मुख्या ।११६।
स्वातंत्र्य-रक्षा त्वपरस्य नुः स्याच् चेष्टासु सम्यक् परमार्थलाभे।
सर्वे नराश्चैव नराः स्वभावान् मुख्ये हि लक्ष्ये सकलात्मताऽस्ति ।१२०।
सर्वे मनुष्या हि मनुष्यधर्माः सन्तः स्वतंत्रा न हि केऽप्यधीनाः।
धर्मात्तबुद्धे रपि चैक्यवत्त्वे उद्बुध्यमानाश्च तथा स्वतंत्राः ।१२१।

स्वातंत्र्य-रक्षणञ्चैव क्व वाऽस्वातंत्र्य-पालनम्।
इति स्फोटयितुं चाथ सूत्रद्वयं प्रकीर्त्यते ।१२२।

[लक्ष्यादि-विचाराधिकरणम्]

सू० उपायालम्बनेष्वेव ॥२७॥

प्रे० स्वातन्त्र्य-रक्षा तु नरै र्नराणां कार्या ह्युपायानुसृतौ स्थिते वै।
लोकाः सुभिन्न-व्यवहार-चेष्टाः सर्वेऽपि मान्याः शुभ-बुद्धयोऽत्र ।१२३।



---

सू० दूसरों के स्वातन्त्र्य की रक्षा हो।

प्रे० लोकसेवा ही संसार में मुख्य उपासना है। धर्म व नीति का भी यही सार है। जो जनगण में केन्द्रित होता वही ईश्वर में भी केन्द्रित होता है। दूसरों की स्वतन्त्रता की रक्षा के प्रयासों में ही परमार्थ-लाभ है। सभी नर स्वभाव से सर्वात्मक-भावना द्वारा एक ही लक्ष्य को सामने रखकर सफलता प्राप्त करेंगे। सभी मनुष्य स्वयं स्वतत्र होकर परस्पर एकता का दृढ़ अनुभव रखें। कोई भी दूसरों को अपने अधीन न मानें। (११६—१२१)

कहां स्वातंत्र्य को मानना चाहिए और कहां उसे नहीं मानना चाहिए इसी बात का स्पष्टीकरण के दो सूत्र हैं। (१२२)

सू० उपायों के सम्बन्ध में (स्वातंत्र्य स्वीकृत है)।

नरों के द्वारा उपाय के विषय पर स्वतंत्रता मानी जाती है। लोग विभिन्न रुचि, सामर्थ्य व व्यवहार युक्त हैं अतः सबको स्वतंत्र मानना चाहिए।

आचार-कर्मस्वपि चेष्टितेषु सर्वे स्वतन्त्रा श्च विशेषयुक्ताः।
युक्तैरुपायैरपि भाव-रूपं धावन्तु लोका अभि लक्ष्यमेकम् ।१२४।

सू० नोद्देश्ये त्वेक एव सः ।।२८।।

प्रे० व्यावर्तमानत्व-विलक्षणत्वे क्षेत्रस्य भेदे "तु" पदेन बोध्ये।
स्वातन्त्र्य-बुद्धिः परियुज्यते वै लोके ह्युपाये न कदापि लक्ष्ये ।१२५।
उद्देश्यमेकं सततं नराणां तद्दृष्टितो नाऽत्र विभेद आप्यः।
स्वातन्त्र्य-रक्षा किल माननीया नोद्देश्य एवं कृति-सत्प्रयासे ।१२६।
आचारादि-विभेद-वल्लक्ष्यभेद स्तथापि वा।
पूर्वपक्षे तु सन्देह इति प्रागत्र सूत्र्यते ।१२७।

सू० वाह्याचरण-भेदेऽपि ।।२९।।

प्रे० चेष्टा-चरित्रेषु विभिन्नताया भेदोऽस्ति लोकेषु कृतो नराणाम्।
इत्थं भवेत् संशय उत्थितोऽत्र लक्ष्येऽपि भेदोऽस्ति न वेति-रूपः ।१२८।

---

परन्तु नाना आचार व कर्म-चेष्टा करने वाले लोगों को लक्ष्य के बारे में ऐक्यबुद्धि रखनी चाहिए। (१२३—१२४)

सू० उद्देश्य में (स्वातंत्र्य) नहीं, वह तो एक ही है।

परस्पर पृथक्कारी विलक्षणता को क्षेत्र-भेद के अनुसार मानना चाहिए। अतः 'तु' पद लगा हुआ है। उपायों में भेद मानना है पर लक्ष्य की एकता में कोई सन्देह नहीं रखना है।

आचारादि में जैसे भेद है वैसे ही उद्देश्य में भी भेद हो इसी प्रश्न का निवारण प्रस्तुत है। (१२५-१२७)

सू० बाह्य आचरण-भेदों में भी (२९)।

प्रे० मानवों की विभिन्न चेष्टा व व्यवहारों से स्पष्ट होता है कि वे सभी बाहरी विषय मौलिक व स्वाभाविक नहीं। इसी के साथ लक्ष्य में भी विभिन्नता न मानी जाय। अतः "अपि" व "बाह्य" शब्दों से भीतरी (आन्तरिक) स्वाभाविक

सूत्रे "ऽपि" शब्दोऽसमुच्चयार्थो "वाह्य" त्युपाधिः प्रतिभासनार्थः।
अन्तःस्थमेवान्त्यमभेदमिष्टं संसूचयन्तौ तत एक-लक्ष्यम् ।१२९।
तथा चोत्तरपक्षेऽत्र स्पष्टंरूपेण सूत्र्यते ।
सन्देह-विनिवृत्त्यै हि लक्ष्यैकत्व-निरूपणे । १३० ।



सू० सैकं लक्ष्यमतोऽमृता ॥ ३० ॥

प्रे० शान्तिः प्रशस्ता भवतीह लक्ष्य मन्त्यं भुवोप्यऽस्थिर-कृत्य-वृत्तेः।
अब्धिर्यथैवं गतिरन्त्यलक्ष्यं धारा समष्टे स्तु वहन्नदीनाम् ।१३१।
निःसंशयं चैव विभेदभिन्ने सांसरिकानामपि मर्त्यलोके ।
लक्ष्यस्य सम्यगविभिन्नमैक्यं शान्तिस्वरूपस्य विभाति गूढम् ।१३२।
सैवाऽमृता शान्तिरिहैक-लक्ष्यं बुद्धे विचारै रविवादमिष्टम् ।
सर्वै नरैरात्मत एष्यमाणम् आचार-कृत्यैरपि साध्यतां वै ।१३३।
तामिष्टमुख्यां हि यथार्थतायाः सल्लक्ष्यमेकं प्रति भिन्नचेष्टाः ।
लोकस्थित्त ञ्चामृतमीप्सव स्तु लोकाः समस्ताः परियान्तु नित्यम्।१३४

---

लक्ष्य जो एक ही है उसे सूचित किया है। प्रथम पूर्व पक्ष में सन्देह उत्थापित करके उत्तर पक्ष में निश्चित सिद्धान्त दिया जाता है जिससे सन्देह का स्थान न रहे। (१२८—१३०)

सू० वही (शान्ति) एक मात्र लक्ष्य है जो मनुष्यों के लिए प्रकृत अमृत है। (३०)

प्रे० प्रशस्त शान्ति अस्थिर संसार की स्थायिता और मानवों का अन्त्य लक्ष्य है जैसे नदियां बहती हुई सागर में जाकर स्थिरता प्राप्त करती है। नाना प्रकार की भिन्नताओं से भरे इस ससार में मानवों के लक्ष्य की एकता बनाये रखने वाली शान्ति की भावना सभी में छिपी हुई विराजमान है। वही शान्ति वास्तव में संसार के लिए अमृत, वही मुख्य पुरुषार्थ है। विविध चेष्टाओं की जड़ में वही एक मात्र लक्ष्य है। आत्मवत् अच्छी तरह

सम्यङ् मानव-सेवेह स्वात्मवल्लक्ष्यचिन्तया।
सुस्पष्टं चेति सूत्रेण सामान्यतोऽथ कार्यते ।१३५।

[मानवाधिकरणम्]

सू० मानवा एव सम्मान्याः ।।३१।।

प्रे० सम्माननीया इह मानवाः स्युः सर्वं विचारानुमता नरं स्तु।
तेऽत्र स्वयं मूर्तविशेषलक्ष्याः संसेवितव्याः सततं तदर्थम् ।१३६।
लोका हि पूज्याः स्वत एवमर्था लोकेऽत्र लोकस्थितिमेषमाणैः।
लोकं श्च लोकेष्ववमानितेषु लोकाद्धि लोकत्वमपास्यतां स्वम् ।१३७

स्वलक्ष्योपाय-भावेन न कोऽपि मानवः पुनः।
केनापि मानवेनात्र सेव्यतामिति सूत्र्यते ।१३८।

सू० न कोऽप्यन्यार्थ-साधनम् ।।३२।।

प्रे० उद्देश्य-बुद्ध्या गत-साधन-धया लोकेऽत्र सेव्याः सततं नराः स्युः।
न स्वात्म-संसाधनरूपमाप्त्वा लोकं कमप्येव नरो भजेद् वै ।१३९।

---

मानव-सेवा करनी चाहिए इसी बात को स्पष्ट करता हुआ सूत्र प्रस्तुत है। (१३१-१३५)

सू० मानव ही सम्माननीय हैं।

प्रे० सभी के लिए मानव सम्मान-भाजन है और यही विचार-सम्मत भी। अतः सभी नर जो मानवता की मुर्तियां है, मानव की ससम्मान सेवा करें। लोग ही पूजनीय तथा लोक स्थिति के भी कारण हैं। मानव मानवों से अवमानित होने पर लोक ही अलोकत्व को प्राप्त कर लेता हैं। अर्थात् स्वविरोध हो जाता है। अपने लक्ष्य के साधन न मानते हुए मानव दूसरे मानवों की सेवा करे इसी अभिप्राय से आगे सूत्र प्रस्तुत है। (१३६-१३८)

सू० कोई भी किसी के साधन नहीं है।

प्रे० साधन-बुद्धि का परित्याग कर उद्देश्य-बुद्धि से सभी मानव की

साम्य-प्रबोधादनुपाय-बोधात् लोकास्तु लोकानिह लक्ष्य-भावात् ।
संसेवमाना हि भजन्तु नित्यं स्वात्मनुरूपेण सदर्थकामाः ।१४०।
कया बुद्ध्या नराः सेव्या इति विधि-निषेधकम् ।
सूत्रमेकं पुनर्दत्तं स्पष्टनिर्देशभावहत् ।१४१।

सू० ना लक्ष्यं स्यान्न तूपायः ।।३३।।

प्रे० ज्ञेया नराः स्यु र्भु वि मूर्तलक्ष्यं कोऽप्यन्य-लक्ष्यस्य न साधन किम् ।
सर्वस्य बुद्धाविहि बद्धमूला जायेत वर्ध्येत परार्थधी सा ।१४२।
स्वापाय-बुद्ध्या नरमन्यमेत्य लोके नरत्वं त्ववमन्यते ना ।
स्वीयं च मान परिहाय नित्यं सन् साधनीभूत इतोऽस्ति सोऽन्यैः ।१४३।
इत्थं भवेन्नाश इहैव नृणां नृत्वस्य बोधस्य च शान्तिदस्य ।
लोकार्थ-साध्यस्य विनाशे लोको नाशं गमिष्यत्यनिवार्यमन्ते ।१४४।

---

सेवा हो । कोई भी दूसरों को अपना साधन न माने । साम्यभावना व लक्ष्य की बुद्धि से अपने बराबर ही दूसरों को मानना चाहिए ।

किस दृष्टि से मानव मानव का व्यवहार करे और किस दृष्टि से न करे उसे स्पष्ट करता हुआ सूत्र प्रस्तुत है । (१३९—१४१)

सू० नर स्वयं साध्य है, उपाय मात्र नहीं ।

प्रे० सभी मानव स्वयं लक्ष्य हैं, कोई भी किसी का साधन नहीं है यही बुद्धि मनुष्यों के मन में बद्ध—मूल हो जिससे परार्थ—बोध उत्पन्न हो सके । अपने उद्देश्य की पूर्ति के लिए कोई भी दूसरों को उपाय के रूप में प्रयोग न करे । जो व्यक्ति दूसरे को साधन माने वह मानव का सम्मान व अपना मान त्यजता है । (१४२—१४३)

इसी तरह मनुष्यों का मानवताबोध जो शान्तिदायक है का नाश होने पर साध्य का ही विनाश होता है, और अन्त में लोक विनष्ट होता है । अतः साधनबुद्धि सर्वथा परित्याज्य है । अर्थसाम्य—हेतु मानव लक्ष्य के ऐक्य की

त्याज्यैव सर्वैः समुपायबुद्धि रन्येषु लोकेष्विह चार्थ-साम्यात् ।
लक्ष्यैक्यभावेन भजेन्नरान् ना सामान्यत स्तेषु परार्थ–बुद्धिः ।१४५।
लोको न लोकस्य तु साधनं स्यात् तत्त्वज्ञ-दृष्टेः प्रतिषिद्धमेतत् ।
लोकत्व-साम्यादनुवर्तमान लक्ष्यत्वमत्रैत्र नयेच्चरेद्वै ।१४६।
अन्योन्यमेवापि च सेवमाना नोपायबोधात् परमार्थत स्तु ।
सर्वेऽपि मान्याः स्वत एव पृथ्व्यां सर्वैं नरै श्चात्र नरत्वधोतैः ।१४७।

नरास्तु साधकाः सर्वे सर्वेषामिह सर्वदा ।
अर्थानां लक्ष्यभावेन सूत्रेण स्फुट्यते पुनः ।१४८।

सू० सर्वः सर्वार्थ–साधकः ।३४।

प्रे० सर्वे नराश्चेत् सुविचारवन्तः सर्वार्थ-सेवा-कृति-निश्चयाः स्युः ।
उद्देश्यरूपेण सदा यतन्तां याथार्थ्यमाप्येत नरैः स्वत स्तत् ।१४९।

लोकेषु श्रद्दधानत्वं तेषां सर्वार्थ-सेवनम् ।
तथान्योन्यस्य सम्मानं विदधीतेति सूत्र्यते ।१५०।

सू० अन्योन्यं परिसम्मानः ।।३५।।

प्रे० तै र्मानवत्वं शिरसीह गण्यम् आचार-निर्धारण-योग्य-मानम् ।
सर्वैं नरैः सकलहायमानै र्येनैव मीयन्त इहेष्टचाराः ।१५१।

---

भावना से सभी मानवों की सेवा करें। मनुष्य कभी भी मनुष्यों के साधन नहीं हैं। साध्य मान कर सभी परस्पर की सेवा करें। यही परमार्थ है। सभी मनुष्य साधक है इसी बात को सूत्र स्पष्ट करता है। (१४४–१४८)

सू० सभी मनुष्य सर्वार्थ के साधक हैं।

प्रे० सभी मानव यदि विचारवान् होकर सभी के हितकर उद्देश्य के साधक होकर निरन्तर प्रयास करे तो मनुष्य अपनी यथार्थ सार्थकता को प्राप्त करेंगे। परस्पर में श्रद्धा रखते हुए सभी की सेवा करें और अपने सम्मान को बढ़ावे। इसी आशय से सूत्र प्रस्तुत है। (१४९ – १५०)

सू० परस्पर का यथार्य सम्मान किया जाय।

प्रे० मानवता को ही शिरोधार्य करके उसी को व्यवहारों में निश्चत मानकर ही साधारण द्वेष व कलह करने वाले लोग अपने आचरण को सुधारे

तद्भाव-संजात-परार्थबोधो लोको हि लोकस्य निरीक्ष्य तत्त्वम् ।
सम्मानमर्थञ्च चरन् यथार्थम् आप्नोतु भूयः परतः स्व-मानम् ।१५२।
सम्मानमन्योन्यमिहैव धृत्वा संलप्स्यते सर्वत एष्यमाणः ।
चिन्ता कृतीभ्यामपि सत्यधोमि विस्तार्यतां सत्यमिहात्म-मानः १५३।
यद्यत्र लोका भुवि मानवैस्तु सम्मानिताःस्युः शुभ-बुद्धि-शुद्धैः ।
मानेन वै मानवतामुखेनाऽत्रस्थाऽनुकूलाऽस्तु तदाथ शान्त्यै ।१५४।
अन्य-सम्मान-कार्येण स्व-सम्मान इहाप्यते ।
आत्माभीष्टानुचिन्ता तु व्यर्थास्ति निन्द्यते ततः ।१५५।

## सू० नात्माभीष्टानुचिन्तनम् ।।३६।।

प्रे० न स्वात्म-भावेन तु वर्त्यतां वै सर्वात्म-बुद्ध्याचरितं नरैः स्यात् ।
संभाव्यताञ्चापि विशुद्ध-सत्त्वै श्चिन्ता परार्थानुनिषेवितव्या ।१५६।
खण्डात्मनस्त्वेवमभीष्ट-चर्चा संभाव्यतेऽन्ते भुवि चाप्यनिष्टा ।
नित्यं विरोधाकुलित-स्वभावाद् व्यर्था च हेया सुख-विघ्न-रूपा ।१५७।

---

व योग्य बनायें । और वे अनुरूप व्यवहारों से मान व सार्थकता प्राप्त करें । परस्पर का सम्मान मन में दृढता के साथ धारण करते हुए वे विचार व कर्मों द्वारा व सत्य-निष्ठा से अपने सम्मान को बढ़ायें । यदि मानव शुभबुद्धियुक्त होकर परस्पर के सम्मान को कायम रखते हुए मानवता को मुख्य माने, तभी शान्ति हो सकती है । (१५१—१५४)

दूसरों का सम्मान करके ही नर स्वयं सम्मानित होता है । केवल स्वार्थ-चिन्ता हेय, विरोधात्मक एवं व्यर्थ है । (१५५)

सू० केवल अपने अभीष्ट चिन्तन नहीं (करना चाहिए) ।

क्षुद्र व खण्डित (सीमित) बुद्धि से अपने इष्ट-विचार व अभीष्ट-चिन्तन नहीं करना चाहिए, क्योंकि वस्तुतः वह इष्ट नहीं, अनिष्ट की जड़ है । एवं आपस में अन्त विरोध लेते हुए वे कदापि सेवनीय नहीं है । विश्वात्म-

सामान्यतोऽभीष्टमिहैव नृणां सर्वैं स्तथा मुख्यमितीष्यते वै।
सर्वेष्टमिष्टं त्विति धी-प्रचेष्टैं र्नात्मेष्ट-भावेन कदापि सेव्यम् ।१५८।
लोकास्तु विश्वात्म-विभावनास्थाः स्वात्माभिमानेन परं विमुक्ताः ।
सर्वार्थ-सम्मानमुपादधानाः सम्मानिताः स्युश्च यथोचितं ते ।१५६।
नराणां हृदि सर्वेषां जन्यतां वर्ध्यतां सदा ।
सर्वार्थ-परता-बुद्धि विशेषेणात्र सूत्र्यते ।१६०।

## सू० सार्वजनीन–चित्तत्वम् ।।३७।।

प्रे० लोकास्तु सामूहिकबुद्धयः स्युः सर्वेऽपि सर्वस्य कृते चरन्तु ।
विश्वात्मधीत्वं त्वविरोध-बाधं कर्मानुवृत्तं च तथोत्तमं स्यात् ।१६१।
कस्यात्मनोऽर्थं न तु कोऽपि लोकः क्षुद्रात्म–बुद्ध्यानुभवेच्च कुर्यात् ।
सर्वार्थसत्तात्मपरायणेन बोधेन कार्येण च वर्ततां सः ।१६२।
सर्वान्तरेणापि नरार्थसेवी सर्वार्थ-संसाधन–चित्त–वत्त्वात् ।
नूनं तथा सार्वजनीन-तत्त्व स्वात्मन्यपोहैव पर लभेत ।१६३।

---

बोध से सर्वजन-हितकर अभीष्ट ही यथार्थ अभीष्ट हैं और मानव उन्हें ही सदा परस्पर सम्मान करते हुए तन मन से अभीष्ट मानकर आचारों सिद्ध से व कायम करने के लिए निरन्तर प्रयत्नवान् रहें, एवं स्वयं सम्मानित हो । इसी भावना को पुष्ट व दृढ बनाने का उपदेश देता सूत्र प्रस्तुत है । (१५६—१६०)

सू० सार्वजनीन भावों से मनको समृद्ध करना चाहिए ।

प्रे० लोग सामूहिक बुद्धियुक्त होकर सबके लिए अनुकूल आचरण करें । विश्वात्मबोध व तदनुरूप उत्तम कर्म करने की प्रवृत्ति मानवों में जागृत हो । क्षुद्र-व्यक्तित्व बोध का परित्याग कर सर्वात्म-बोध को मन में निरन्तर प्रबल रखते हुए सबकी सेवा करें व अनुकूल आचरण करें । समस्त प्रकार से सर्वार्थ का साधन करने वाला मनुष्य-मात्र की सेवा करता हुआ श्रेष्ठ सार्वजनीन-भाव को अपने में उत्पन्न करता है ।

और भी कई सद्गुण मानवों को अर्जित करने चाहिए जो शान्ति को

अन्येऽपि सद्गुणाः केच येऽर्जनीया स्तथा नरैः ।
सूत्र्यन्ते क्रमश स्त्वत्र शान्त्यधिगमहेतवः ।१६४।

सू० अद्वेषः समवेदनम् ॥३८॥

प्रे० अद्वेष-दृष्टिं समवेदनञ्च लोकाः स्वभावे तु समर्जयेयुः ।
आचार-बोधेषु समं प्रकर्षं सम्यक् प्रयोगेन च सन्तु धन्याः ।१६५।
अद्वेष-भावैः पर-मानसेवी प्रेमप्रभावं लभते नरेषु ।
सर्वो हि लोकः समवेदनं सत् संजन्य चास्तां सकलैरभिन्नः ।१६६।
साम्यैक्य-बुद्धि स्तु नरेषु नृणाम् अद्वेषमैत्रं सकलार्थ-रागम् ।
प्रेमाऽप्रमेयं खलु वेदनञ्च सर्वात्मकत्वेतमिहादधातु ।१६७।

सू० एक-लक्ष्य-निषेवित्वम् ॥३९॥

प्रे० मुख्यार्थ-शान्ते स्त्विह साधनं सत् परं हि कर्मैहिक-कर्मराशेः ।
तस्याः प्रतिष्ठार्थमथार्तलोका स्तत्साधनीभूत-कृती श्चरन्तु ।१६८।



---

कायम करने के लिए आवश्यक हैं। वे आगे के सूत्रों में उक्त होते हैं। (१६१—१६४)

सू० अद्वेष व समवेदना ।

प्रे० मनुष्य अपने स्वभाव में अद्वेष व समवेदना को बद्धमूल करें, और विचार-बोध व आचारों में समान रूप से उन्हें विकसित करके प्रयोगों के द्वारा अपने को सार्थक करें। मानव अद्वेष-भाव से परस्पर की सम्मान पूर्वक सेवा करते हुए सभी मानवों में प्रेमभाव प्रसारित करें तथा सबके मन में सब के लिए समवेदना हो और वे परस्पर अभिन्नता का अनुभव करें। साम्य व एकता की बुद्धि के साथ अद्वेष व मैत्री एवं सर्व-हितकर-भावना, प्रेम व समवेदना दृढ़ हों तभी सर्वात्मकता का यथार्थ अनुभव किया जाता है। (१६५—१६७)

सू० एक ही लक्ष्य की सेवाभावना हो ।

प्रे० शान्ति ही मनुष्य जीवन का मुख्य लक्ष्य है। इसके अनुकूल साधन

संसाधनोपाय-विशेषमेत्य सर्वे नराः स्युः सुविवेकवन्तः ।
तल्लक्ष्यमाद्यं हि भजन्त आर्तिं सांसारिकां संपरिवर्जयन्तु ।१६९।

सू० गृहीतोचित-चेष्टता ॥४०॥

प्रे० संचेष्टमानत्वमथोचितस्य संजन्यतां कर्मण एव लोकैः ।
स्वात्मान्तरेषु क्रमशः प्रगाढं निष्ठात एवैवमुपाय आप्यः ।१७०।
योग्यप्रचेष्टामनुवर्तमानै र्लोकै स्तथापीह सुसाधनै र्वै ।
कर्मभ्य एवञ्च विवेक-वेगात् संसेव्यतां शान्ति रनन्यकामैः ।१७१।

[उपायाधिकरणम्]

सू० सर्वैः सर्वेष्ट-सन्धानम् ॥४१॥

प्रे० अन्योन्यमिष्टस्य विचारवन्त आधानमेवं सततं प्रकुर्युः ।
सर्वे नरा वै भुवि मानवानां युक्त्या तथाऽऽचारकृतो नियुक्ताः ।१७२।
सन्धान इष्टस्य नियुज्य बुद्धिं साम्यं निधायैव नृ–तत्त्ववेदाः ।
सोदार-भावा विचरन्त ऐक्यं स्युः सर्वलोके सकलेष्टमाप्यम् ।१७३।

---

रूपी कर्म पार्थिव सभी कर्मों से श्रेष्ठ है। मनुष्य विवेकवान् होकर उपयुक्त उपायों के सहारे उसी (शान्ति) को लक्ष्य मानकर उसकी सेवा करते हुए ससार के क्लेशों से मुक्ति पायें। (१६८—१६९)

सू० उचित प्रयास स्वीकार किया जाय।

प्रे० लोग उचित कर्म करने के लिए तत्पर व प्रयासी रहें अपने मन में क्रमशः निष्ठायुक्त उपाय उपलब्ध हो। साधन-सम्पन्न होकर मानव योग्य चेष्टा करते हुए विवेक के बल पर शान्ति की एक मन से सेवा करें। (१७०—१७१)

[उपायाधिकरण]

सू० सबके द्वारा सबकी भलाई की तलाश हो।

प्रे० सभी लोग विचारवान् होकर जन कल्याण को इष्ट मानकर

ज्ञानमात्रं भवेन्नात्र शान्ति-लक्ष्यस्य साधनम् ।
अन्येऽपि हेतवः सन्ति सूत्र्यन्ते ते ततःपरम् ।१७४।

सू० तत्तदुपाय-वीक्षणम् ।।४२।।

प्रे० न ज्ञानमात्रं भवतीह हेतु रिष्टस्य मुख्यो यदि चैतदाद्यः ।
अन्ये पुन र्हेतव एव साध्या इष्ट-प्रतिष्ठापन-कर्मणस्तु ।१७५।
ज्ञानं परं तात्त्विकमाद्यहेतु र्नो वा स्वयं पूर्ण इतीह वाऽन्त्यः ।
तस्योपरिष्टादथ कर्म कार्यं लक्ष्यानुरूपं तु चरन्मनुष्यैः ।१७६।
ज्ञानं ह्यनिष्टेष्ट-विवेक-मूलम् आद्यं नराणामुपयोजनीयम् ।
लोकै रुपायात्त-विचार-तन्त्रं ज्ञानं विशेषं हि समर्जनीयम् ।१७७।

---

अपनायें एवं युक्ति से स्थापित करें। बुद्धि से निश्चित करके नरत्व के आधार पर साम्य को स्वीकार करे एवं उदार–भाव धारण करते हुए सभी में समानता व एकता देखें। केवल ज्ञान मात्र से शान्ति रूप लक्ष्य की सिद्धि नहीं होती है। अन्य कारण भी बतलाये जाते हैं। (१७२—१७४)

सू० उन उपायों का संग्रह हो।

प्रे० इष्ट प्राप्ति के लिए केवल ज्ञान पर्याप्त नहीं है। यद्यपि यह सर्व प्रथम साधन है। इष्ट सिद्धि के लिए अन्य कई साधन हैं जिन्हें हमें हासिल करने हैं। (१७५)

इस विषय पर ज्ञान प्राथमिक हेतु है अन्तिम वा स्वयं पूर्ण हेतु नहीं है। ज्ञान के अनुसार आगे कर्म करना आवश्यक है। ज्ञान ही भला-बुरा समझाने वाला मनुष्यो के आद्य साधन है। अतः विचारयुक्त ज्ञान पहिले अर्जन करना चाहिए। विशेष (शान्ति) के योग्य व अनुकूल ज्ञान उत्साही लोगों को प्राप्त करना चाहिए, और बाद में अनुरूप कर्म व प्रयासों द्वारा लक्ष्य की ओर बढ़ना चाहिए। उचित साधन के विचार से प्रेरित होकर मानव को सदा अनुकूल आचरण करना चाहिए ताकि लक्ष्य-बुद्धि सार्थक हो सके। केवल ज्ञान से ही मानव का कल्याण सिद्ध नहीं होता है। प्राप्ति के

ज्ञानं ह्युपायस्य विशेषनिष्ठं सम्यक् लभेरन् तु नराः समुत्काः ।
तद्ग्राह्यकर्माप्यनुरूपमाप्त्वा तेनैव ते सन्तु तदात्तलक्ष्याः ।१७८।
संसाधनानां हि विचार-सत्ताः साम्यं नराः सच् च चरन्तु नित्यम् ।
लक्ष्यस्य धीः साधन-वेद-युक्ता सार्थक्यमाप्नोति चरन्नरेषु ।१७९।
ज्ञानान्नरेष्ट स्वयमेव नाप्यं प्राप्तेरुपायानुसृतेत-धीतः ।
सम्यक् सदाचार-परैर्नरैश्च लभ्येत लोकेष्टतमाऽत्र शान्तिः ।१८०।

तथाऽऽचार-प्रचारैस्तु सत्यानुष्ठानतः पुनः ।
सम्यगेवानुवर्तनं मुख्यमित्यथ सूत्र्यते ।१८१।

सू० योग्याऽऽचार-प्रचारैश्च ।।४३।।

प्रे० आचार-मुख्यै स्तु विचार-मान्यै र्योग्यैः प्रचारै रथ साधनै श्च ।
वाग्भिश्च नित्यं ह्यनुकूलमुक्त्वा लक्ष्यानुसारेण नरा श्चरन्तु ।१८२।
आचार-कृत्यैरिह तत्त्व-मान्यैः सम्यक् प्रचरानुकृतौ चरद्भिः ।
लाकै स्तथा वै प्रतिपाद्यतां सा सर्वेष्टमुख्याऽत्र नृलोक-शान्तिः ।१८३।

सू० सत्यमेवानुवर्तनम् ।।४४।।

प्रे० मुख्येष्ट-लाभ-प्रतिपादने वै विज्ञान-सारानुमतं सुकृत्यम् ।
कायेन वाचाऽपि विधृत्य निष्ठां वर्तेत लोको निरतः सदात्मा ।१८४।

---

उपाय अमल में लेते हुए अनुकूल सद् आचारों से मानव के मुख्य लक्ष्य शान्ति को हासिल किया जा सकता है । आचार, प्रचार व यथार्थ अनुष्ठानों के सहारे हमें आगे बढ़ना है इसी बात को स्पष्ट करता हुआ सूत्र प्रस्तुत है । (१७६—१८१)

सू० योग्य आचार एवं प्रचारों से ही ।

सू० यथार्थ अनुवर्तन आवश्यक है ।

प्रे० मुख्य इष्ट लाभ के लिए विवेक के स्वीकृत सत्कर्म में काय मन व वाक्यों से निष्ठा रखते हुए लक्ष्य के अनुकूल आचरण मानव सदैव करें । यथार्थ रूप से (पूर्ण ईमानदारी से) तत्त्व ज्ञान के अनुरूप, विचार, कर्म,

सम्यक् सुनिष्ठं परमं यथार्थं तत्त्वानुरूपं कृति-धी-मनोभिः ।
वाग्भिश्च भाषाभि रिहाश्रितव्यं संवर्तनं वै भुवि मानवानाम् ।१८५।

सू० सत्यं सत्यमुपाधेयं ।।४५।।

प्रे० सत्यं ह्युपाधेयमथेह सत्यं चिन्तासु कार्येष्वपि मानवानाम् ।
वाक्येषु नित्यं पर-तत्त्व धीनां शान्तेः कृते साधुकृतां सदस्तु ।१८६।
आचार एवापि विचारणेषु सत्यं यथार्थं भुवि माननीयम् ।
वाक्सु प्रचारेषु तथोपनेयं कापट्य-मात्रं परिहाय लोकैः ।१८७।
कथं सत्यमुपानेयं चिन्ता-वाग्-बुद्धि-कर्मसु ।
तत्स्पष्टीकरणायाऽत्र सूत्र्यतेऽथ सतां मुदे ।१८७।

सू० निष्ठा-श्रद्धानुरागतः ।।४६।।

प्रे० निष्ठां समाश्रित्य तथानुरागाच् छ्रद्धा-समेताश्च भवन्तु लोकाः ।
सत्यं चरन्त्वेव वसन्तु सत्ये सत्यस्य सत्यं परिसेवमानाः ।१८८।
शुद्धे विचारे पर-तत्त्व-वेदे श्रद्धां निधायैव तदात्त-सत्ताम् ।
उग्रानुरागेण सदा चरन्तु लोकाः स्वभावात् प्रिय-सत्य-धर्माः ।१८९।

---

संकल्प, आस्था, वाक्य व भाषा का प्रयोग मानव के द्वारा संसार में निरन्तर किया जावे । (१८२–१८५)

सू० सत्य ही यथार्थ रूप से ग्राह्य है ।

प्रे० चिन्ता, कार्य, वाक्य में सदैव तत्त्व-ज्ञानि मानव सत्य को ही ग्रहण करें । आचार, विचार, भाषण व प्रचारों में सदा सत्य ही प्रकट होवे । सत्य को कैसे स्वीकार किया जावे (विचार, भाषण, बुद्धि व कामों में) इस प्रश्न पर स्पष्टीकरणार्थ सूत्र प्रस्तुत है । (१८६ १८८)

सू० निष्ठा, श्रद्धा, व अनुराग के साथ ।

प्रे० मानव निष्ठा व श्रद्धा युक्त होकर सत्य व सत्य का सार ही ग्रहण करें । शुद्ध विचार व तत्त्व पर आधारित ज्ञान में श्रद्धा रखते हुए प्रबल

शुद्धे विचारे पर-तत्त्व-वेदे श्रद्धां निधायैव तदात्त-सत्ताम् ।
उग्रानुरागेण सदा चरन्तु लोकाः स्वभावान् प्रिय-सत्य-धर्माः ।१९०।

स्पष्टतो वदतामेव सत्यगुणं तथाग्रतः ।
सूत्रकृतामभिप्राये सूत्र्यते तदितः पुनः ।१९१।

## सू० ज्ञानानुरूप आचारश् ।४७।।

प्रे० यज्ज्ञानमादाय नृ-तत्त्व-श्रद्धां सत्यानुसन्धो नर आचयेत्तु ।
सत्त्वं विचारेष्वपि निष्ठकर्माऽऽचारेषु सम्यग् ह्यु पपादयेच्च ।१९२।
ज्ञानानुरूपं ० सततं सुनिष्ठो लोकः सदाचारमिहादधातु ।
यः सत्यदर्श्यप्यनुवृत्तधर्मं श्रेयान् सलोके नितरां वरेण्यः ।१९३।

आचारेषु भवेद् योग्यमार्जवस्य प्रयोजनम् ।
तदेतत् कीर्त्यते सूत्रेऽपरिहार्यतेया मतम् ।१९४।

## सू० चाऽपरिहार्यमार्जवम् ।।४८।।

प्रे० पन्था हि शान्तेः सरलत्वमेव कापट्य-वर्जं प्रणयेत–वृत्तम् ।
तच्चार्जव ञ्चाऽपरिहार्यमाप्यं येनैव विश्वेऽवतरेत्तु शान्तिः ।१९५।

---

अनुराग वश नित्य सत्य का आचरण करें । स्वभाव से ही नर सत्य-धर्म प्रिय है । (१८६-१९०)

सत्य की महिमा स्पष्ट रूप से बताने के लिए सूत्र प्रस्तुत है । (१९१)

सू० ज्ञान के अनुरूप ही आचार होना चाहिए ।

प्रे० नृ तत्त्व के आधार पर यथार्थ ज्ञान के अनुरूप विचार व निष्ठा के साथ आचार मानव करें । सत्यदर्शी व्यक्ति सत्य का आचरण करें । क्योंकि सत्यानुकूल आचार ही धर्म है । और वही श्रेष्ठ व प्रशस्य भी । आचरणों में सारल्य बरतना उचित व आवश्यक है । इसी विषय पर जोर देता हुआ सूत्र प्रस्तुत है । (१९२- ९४)

सू० आर्जव (सरलता) अपरिहार्य है ।

प्रे० कपटतावर्जित सारल्य प्रेम के साथ अपनाना शान्ति के लिए

सारल्यमेवेह समर्जितव्यं प्रेम्णोऽच्छलस्यापि परं सहायम् ।
तद्-द्वारमाश्रित्य तथाऽपराणि सत्कारणान्येव च सम्भवेयुः ।१९६।
ऐक्यमात्रं नरत्वेन नरैश्वर्यान विवर्जितम ।
अवास्तवं तु तन्मान्यं नेष्टमित्यथ सूत्र्यते ।१९७।

सू० सम्पन्नमैक्यमालक्ष्यम् ।।४९।।

प्रे० सम्पन्नमैक्यं सविचित्ततेतं सर्वैर्विशेषैः समलंकृतं सत् ।
आलक्षितव्यं नितरां नाराणां सत्तानु भूतौ मति-कृत्य-भेदात् ।१९८।
नापहि हेयं विदधातु लोके वैचित्र्य-सम्पत्-सुविपीनमैक्यम् ।
तच्छून्यवद् वै न तु कार्यकारि सम्पन्नमैक्यन्तिह लक्ष्यमीक्ष्यम ।१९९।
ऐक्यं हि तद्वास्तवमेव धेयं नो कल्पितं नाऽपि स्पात्त-सत्तम् ।
यद् योग्य हेतु र्भुवि शान्ति-लाभे सर्वज्ञ सर्वैः समुपास्यतां तत् ।२००।
मान्येषु लोकेषु नरै स्तदाप्यं स्वान्तः स्थमैवथ ह्यपि मानवानाम् ।
स्वैश्वर्य-चित्रं कदापि रिक्तं सद्दृष्टि-युक्तार्जित-सत्य-सारैः ।२०१।
ज्ञान विचारमात्रं वा केवल दूर कारणम् ।
मुख्यं सम्यगनुष्ठानं सर्वथैवेति सूत्र्यते ।२०२।

---

अति आवश्यक पथ है। अतः निश्छल सरलता के द्वार से ही शान्ति के अन्य उचित कारण भी अर्जित किये जाते हैं (१९५-१९६)

केवल नरत्व-मूलक ऐक्य पर्याप्त नहीं है क्योंकि यह अवास्तव व अनुपकारक है। इसी अर्थ को सूत्र से स्पष्ट किया जाता है।(१९७)

सू० सम्पन्न ऐक्य ही संग्रहणीय है।

प्रे० विचित्रता युक्त सम्पन्न एकता का अनुभव व प्रत्यक्षीकरण आवश्यक है जो विविधता व विशेषों से भूषित है। केवल मात्र निर्विशेष एकता सहायक नही होती है। अत मानवों के ऐश्वर्ययुक्त व सम्पन्न ऐक्य ही आदेय व स्वीकार्य हैं। विचार-मूलक शुद्ध ज्ञान दूरवर्ती कारण है। उसके यथार्थ अनुष्ठान पर जोर देता हुआ सूत्र प्रस्तुत है। (१९८-२०२)

सू० चिन्ता -धी–वाक्य–कर्मसु ॥५०॥

प्रे० नित्यं सुचिन्ता समतैक्य-मूला साद्याऽपि हेतुः करणं न तस्य ।
वाक्यै स्तथा कर्मभिरन्ययत्नैः सत्यानुरूपैरतुनुवर्तनं स्यात् ।२०३।
सद्बुद्धि–चिन्ताभिरवक्ष्य मक्ष्य वाक्ये मनः-काय–विहार–कृत्ये ।
वर्तेत निष्ठान उपात्त–तत्त्वः साकार-सत्तां नर आदधीत ।२०४।

[शक्त्यधिकरणम्]

सल्लक्ष्द-साधिका शक्तिः सदैवाऽस्त्विह सर्थका ।
योग्येऽर्थे संप्रयुक्तव्या नाऽयोग्यार्थे सूत्र्यते ।२०५।

सू० । शक्ति र्योग्येऽनुयोज्याऽस्तु ॥५१॥

प्रे० पूर्णाधिलाभे धुवि स्थिर–शान्ते र्योग्या परं संभृत–सार्थकाऽस्तु ।
सर्वैः स्वशक्तिस्तु नियोग–वद्भि र्युक्ताधिकारेषु नरेषु सर्वा ।२०६।
नूनं स्व–शक्ति र्विविधा नरैः सा स्वल्पापि वाऽथेह सती प्रभूता ।
सम्यङ् नियुज्येत यथार्थ–लक्ष्ये लोकनुसेवां–परताऽर्थ–धन्या ।२०७।

---

सू० चिन्ता, बुद्धि, वाक्य व कर्मों में ।

सदैव कल्याणमयी चिन्ता व समताबुद्धि प्रथम कारण है, पर कारण (मुख्य हेतु) नहीं । वाक्य व कर्मों से उसका परिपालन होना चाहिए । सभी प्रकार प्रयासों द्वारा ही अन्तिम लक्ष्य (शान्ति) को साकार व वास्तविक करना चाहिए । (२०३–२०४)

शक्ति का उचित प्रयोग ही उसे सार्थक बनाना है । (२०५)

सू० शक्ति योग्य विषय पर प्रयुक्त हो ।

प्रे० शान्ति को पूर्णतया कायम करने के लिए मानव को अधिकार के अनुरूप योग्य स्थल पर शक्ति को लगाना है वह चाहे कम हो या ज्यादा पर लोक सेवा के लिए ही उसका प्रयोग उचित है । (२०६–२०७)

लोकोपकाराय नियुज्यमाना, शक्तिः सती वै परमार्थ-शक्तिः।
अन्योपकारार्थकृदेव साऽर्था योग्ये स्थले साधु नियुज्यतां सा ।२०८।

शक्ति-प्रयासञ्च सुबुद्ध्यधीनं लोक स्तु लक्ष्याभिनिबद्ध-दृष्टिः।
साध्यस्य मानेन विचारयन् वै योग्यार्थ-लोकोपकृतौ युनक्तु ।२०९।

शक्तिस्तु सार्थकाऽस्तीह सर्वोपकार-साधिका ।
अन्यथाऽऽत्मावरोधेता शान्ति-हन्त्रीति सूत्र्यते ।२१०।

सू० नरोपकार-तत्परा ॥५२॥

प्रे० लोकोपकारो विषयो नृ-शक्तेः सर्वैरपीयं हि तथा नियोज्या।
रक्षाभि-संपालन-साधनं सा नो पीडनेष्वेव नृणां यथार्था ।२११।

क्रमेण साधनानां च शान्ति-स्थापन-कामिनाम् ।
वर्णयित्वा ततो भूयः सूत्र्यन्ते तान्यथोत्तमम् ।२१२।



---

लोकोपकार के लिए नियुक्त शक्ति ही पारमार्थिक शक्ति है। अतः अन्योपकार के कामों में ही उसका साधु प्रयोग होना चाहिए। लक्ष्यार्थि मानव सुबुद्धि से प्रेरित होकर सदा अपनी शक्ति व प्रयत्नों को योग्य स्थल में लोगों के कल्याण में लगाते रहे क्योंकि यह एक सक्षम साधन है। अन्यथा (स्वार्थ बुद्धि से) इसका प्रयोग आत्मा को अवरुद्ध करके शान्ति का घातक होता है। (२०८–२१०)

सू० वह (शक्ति) नरोपकार कुशल है।

प्रे० नरोपकार ही शक्ति का ध्येय है। इससे मानव सब के पालन व रक्षण कर सकते हैं। और इसीलिए वह सार्थक भी होती है। शान्ति स्थापना के इच्छुक मानवों के अपनाने योग्य साधनों का क्रमशः वर्णन प्रस्तुत हो रहे हैं। (२११–२१२)

सू० मनसा चिन्त्यतां लक्ष्यं ।।५३।।

प्रे० मुख्यं सदुद्देश्यमथेह लोकाः सत्यार्थ-विज्ञा श्चिर-शान्ति-रूपम् ।
सचिन्तयेयुः प्रथमं सनिष्ठाः स्वात्म-प्रतिष्ठापन माप्त-कामाः ।२१३।
संकल्पितं कर्म सुसंस्कृतेन सद्भावनोत्कृष्ट - सुमानसेन ।
निश्चित्य सत्यं त्विति सर्वथापि लोकैः सदातस्त्वनुवर्तितव्यम् ।२१४।

सू० बुद्ध्या च परिमार्ज्यताम् ।।५४।।

प्रे० सन्मुख्य-लक्ष्यं मनसा समन्ताल् लोका स्तथा चैव सुबुद्धि-शिष्टाः।
स्वार्थं परार्थे प्रविमज्जयन्तः संचेष्टमाना भुवि ते भवेयुः ।२१५।
निश्चित्य सम्यङ् मनसा प्रबुद्धै रुत्कृष्टबुद्ध्या सततं नरैश्च ।
सर्वार्थ-कृत्यं परिमार्जितव्य शुद्धात्मभिः सत्ययुतं विधायम् ।२१६।

सू० युक्ति-जालैः प्रतिष्ठाप्यम् ।।५५।।

प्रे० सत्त्वात्म-युक्ते रपि शक्ति-राशेः सच्चात्मपक्षं परिषेवमानैः ।
अन्यस्य पक्षाः समपाक्रियन्तां सम्पाद्यतां मुख्यमथेष्टरत्नम् ।२१७।

---

सू० पहिले मनसे लक्ष्य को निश्चित किया जाय ।

प्रे० मानव सद्उद्देश्य (शान्ति) को सत्य बुद्धि के द्वारा निश्चित रूप से ग्रहण करें और निष्ठा के साथ उसे प्रतिष्ठित करने के लिए तत्पर होवे । संकल्पित कर्म को सद्भावना युक्त मन से स्वीकार करके व सत्य मान कर उसका अनुवर्तन करें। (२१३–२१४)

सू० बुद्धि के द्वारा अच्छी तरह मार्जित किया जाय ।

प्रे० शुभ लक्ष्य को सामने रखकर सद्बुद्धि–युक्त मानव स्वार्थ को परार्थ में विलीन करके आगे बढ़ने को तत्पर होवे । सकल्पित शुभ व अनुकूल कार्यक्रम को शुद्धात्मा होकर निरन्तर करते रहे । (२१५-२१६)

सू० युक्तियों से स्थापित किया जाय ।

प्रे० यथार्थ तत्त्व–मूलक युक्तियों के द्वारा संकल्पित विषय को दृढ़

मुख्येष्ट-लक्ष्यं त्विह शान्ति-रूपं युक्तेः स्वशक्त्या प्रतिपादयन्तः।
उद्भूत-सत्त्वं प्रतिपक्षि-तत्त्वं सखण्ड्य सम्यक् खलु साधयन्तु ।२१८।

सू० साध्यते सर्व-साधनैः ।।५६।।

प्रे० संचिन्त्यमान ह्यपि निश्चितं सल्लक्ष्यं च संसाधनमेव सम्यक्।
सत्यानुवर्ती नर आचरन् तद् वाक्यै स्तथा कर्मभिरादधातु ।२१९।
चत्वारि सूत्राणि विभान्ति दीप्तं सम्मानितव्यानि नरैः समन्तात्।
शान्ते र्यथार्थं भजनार्थिभिश्च साहश्यतोऽर्थस्य तथैक-पक्तौ ।२२०।

पौर्वापर्य-क्रमेणैव "मनसा"दि-चतुष्टयम्।
"साध्यते"ऽन्त समादेयमित्यत्र स्पष्टतो मतम् ।२२१।

[साधनानुकूल-गुणाधिकरणम्]

प्रेमाऽहिंसन-भावेन सत्योपकार-बुद्धितः।
समाचरण-संकल्पा नराःस्युरिति सूत्र्यते ।२२२।

सू० प्रेमाऽकृत्रिम-सन्तोषाश् ।।५७।।

प्रे० प्रेमेह शुद्धं जनयेत्तु लोकः सर्वान्तरीयं सततं नरेषु।
संवर्धयेच्चापि तथा हि सर्वः कापट्यहीनं भव-शान्तिमूलम् ।२२३।

---

बनाया जाय एवं मुख्य लक्ष्य को सम्पादित किया जाय। यह मुख्य लक्ष्य शान्ति ही है। अतः विरोधी मतों का खण्डन करता हुआ अपनी शक्ति के अनुसार मानव सतत प्रयास करें। (२१७-२१८)

सू० सभी योग्य साधनों से सिद्ध करना चाहिए।

प्रे० बुद्धि द्वारा निश्चित सद् लक्ष्य व उपयुक्त साधनों को सत्यानुवर्ती मानव वाक्य व कर्मों से आचरण में लावें। ये चार सूत्र सभी के मान्य हो जो शान्ति के प्रकृत सेवक हैं। अतः ये चारों सूत्र एक ही पंक्ति में रखे गये हैं। आगे पीछे के विचार से 'मनसादि' चार सूत्र हैं जिनका अन्तिम "साध्यते" है।

सू० प्रेम व अकृत्रिम सन्तोष हो।

प्रे० मानव शुद्ध प्रेम मानवों के लिए मन में उत्पन्न करें व कपटता का

सन्तोषभावं मनसि प्रकर्ष्यं स्वस्यापरस्यापि समं निधाय ।
अन्योन्य-सन्तोषयुता नराः स्युः प्रेमामितं शुद्धमथादधानाः ।२२४।

सू० चाऽहिंसा-पूत-भावना ।।५८।।

प्रे० सद्भावनेनापि धरेदहिंसां सर्वोऽपिलोकः सदयो भवेच्च ।
अद्वेष-हिंसस्तु सहानुभूत्या चिन्तानुकर्मभ्य इहामरः स्यात् ।२२५।
शुद्धात्म-भावादिह चेदहिंसां सप्रेम-निष्ठां समुपार्जयेन्ना ।
शान्तेः समर्थं शुभ-साधन च सम्यग् विधत्तां नर एव पृथ्व्याम् ।२२६।

सू० हेयं स्वामित्व-दौर्बल्यम् ।।५९।।

प्रे० क्षुद्रात्म-भावं त्वभिमानमाप्य लोका भवन्त्येवमशान्तिपात्रम् ।
दौर्बल्यमेतन्नर-जीवनेषु त्याज्यं समन्तादथ मानवानाम् ।२२७।
खण्डा प्रतीति स्त्ववराऽऽत्मन स्तु संबाधते शान्ति-समागमं वै ।
बोधञ्च तस्या न च साधयन्ती दौर्बल्य-मूलेति सतां मतं स्यात् ।२२८।

---

त्याग करें । अपने पराये में समान दृष्टि रखकर सन्तोष धारण करें । (२२३—२२४)

सू० अहिंसा से पवित्र भावना हो ।

प्रे० सद्भावना के साथ अहिंसा मन में धारण करते हुए मानव सदय होवे, व द्वेष-हिंसा से मुक्त होकर चिन्तानुरूप कर्म करके अमर होवे । आत्मा को शुद्ध रखते हुए अहिंसा व प्रेम, निष्ठा के साथ विकसित करें । ये सब शान्ति के लिए सक्षम साधन हैं जिनके द्वारा पृथ्वी में शान्ति स्थापित की जा सकती है । (२२५—२२६)

सू० स्वामित्व का अभिमान एक दौर्बल्य है ।

प्रे० संकीर्ण व्यक्तित्वबोध से मानव अशान्ति प्राप्त करते हैं । यह एक कमजोरी है । अतः इसका परित्याग होना चाहिए । खण्ड (समिति) अनुभूति निकृष्ट व त्याज्य है । यह शान्ति के आविर्भाव के रास्ते में बाधा उत्पन्न करती है । यह कदापि सहायक नहीं है । (२२७—२२८)

सू० सामग्रिकं बलं बलम् ।।६०।।

प्रे० अंगांगि-भावेन समाज-जातौ सर्वे नराः सन्त्यपि निश्चितं तत् ।
व्यष्टे र्बलं सत् स्वत एव हेयं त्याज्यं समष्ट्यात्त-बलाधि-वुद्ध्या ।२२६
सामग्रिकं वै भुवि मानवानां सामर्थ्य-युक्तं ह्यपि सार्थकं सत् ।
युक्तं यथार्थं बलमाप्त-मान्य शान्तेर्विधाने सहकारि-हेतुः ।२३०।
स्वात्म-स्थमेवास्त्यबलं बलं तच् छ्क्ति र्यथार्था गण-सेविनी वै ।
प्रत्येक आप्तोक्ति-विशेष-शिष्टो व्यक्तिः समाप्नोतु समष्टि-दार्ढ्यम् ।२३१

कार्ये तु गुरुताऽस्तीह न व्यर्थ-चिन्तने कदा ।
कृत्यै र्महत्व माप्नुयाद् बृहत्त्व ञ्च चरित्रतः ।२३२।

न वाक्यै र्न च विद्याभिः साधनै र्न च कल्पनैः ।
अदृढ़-व्रत-संकल्पश्चाचरन् नैति पौरुषम् ।२३३।

अतश्चात्र कृतौ नृणामस्ति च स्यात्तथा परम् ।
गौरव धार्यमान तत् प्रशंसायां च सूत्र्यते ।२३४।

---

लू० सामूहिक बल ही बल है ।

प्रे० अंगांगि भाव से व्यक्ति व समूह वर्तमान रहते हैं । अतः व्यक्तिगत बल समष्टिगत बल से निकृष्ट है । सामूहिक बल कार्य–साधक है एवं यथार्थतया सामर्थ्यवान् है जो शान्ति को स्थापित कर सकता है । अतः सभी मानव सभी के लिए यत्नवान् रहे अर्थात् समष्टिबुद्धि से आगे बढ़े । (२२६—२३१)

कर्मों में ही गुरुत्व है, उन्हीं से महत्त्व व चरित्र से वृहत्त्व प्राप्त किये जाते हैं । केवल व्यर्थ-चिन्तन द्वारा नहीं है । जो मानव वाक्य, ज्ञान, साधन व कल्पनाओं के द्वारा दृढ़ संकल्प होकर आचरण न करें वह पौरुष नहीं पाता है । अतः मानवों को गौरव प्राप्त करने के पथ स्पष्ट किये जाते हैं । (२३२—२३४)

सू० क्षुद्र-व्यक्तित्व-मुक्तत्वम् ।।६१।।

प्रे० संकीर्णतां चात्मगतां स्वयं वै क्षुद्रत्वयुक्तामपि मानवानाम् ।
संगर्हणीयां मति-कर्म-सत्त्वां लोकास्त्यजेयु र्भुवि सर्वदैव ।२३५।
सद्-भावनातो नर-बुद्धितायाः सत्ता-विभिन्नेषु नरेष्वभिन्नम् ।
सामान्य-बोधं ह्यु पपद्य सर्वे आत्मा-प्रसारत्वमथायतन्ताम् ।२३६।

सू० सर्वार्थं जीवितं हितम् ।।६२।।

प्रे० सर्वार्थमेवात्र नरा भुवो वै स्वीयं मनः कर्म च भव्य-भावात् ।
याथार्थ्यतो जीवितमादधानाः लक्ष्यानुरूपं चरितं धरेयुः ।२३७।
संजीवित स्याज्जन जीवितं सत् सर्वत्व-बुद्ध्यात्त-सुसत्त्वपूर्णम् ।
सर्वार्थमेवेह सदा नियुक्तं सार्थक्यमाप्नोति नृगौरवार्हम् ।२३८।

सू० सर्वतो लक्ष्यतां शान्तिः ।।६३।।

प्रे० शान्तिः समस्ते भुवने परार्थः सैवाऽत्र सर्वस्य नरस्य सेव्या ।
विस्मर्यमाणाऽप्यनिवार्यमाणा लक्ष्योत्तमत्वान्नृकृतेर्नियन्त्री ।२३९।

---

सू० क्षुद्र-व्यक्तित्व से मुक्ति प्राप्त करना चाहिए ।

प्रे० मानव अपने स्वाभाविक क्षुद्रत्व जो अनुचित है को विचार व आचारों से त्याग दे । सदभावना को वे अपनाये और पृथक सत्ता होने पर भी अन्तःस्थित समानता (अभेद) व सामान्यबोध से आत्मप्रसार करते रहे । शान्ति स्थापन के लिए यह आवश्यक है । (२३५—२३६)

सू० सर्वार्थक जीवन ही हितकारी हैं ।

प्रे० मानव मन, कर्म द्वारा (उचित विचार से) सर्वार्थक हो एवं यथार्थ रूप से सर्वार्थक जीवन को अपनाकर तदनुसार आचरण करें । सर्वार्थक जीवन ही सुसत्त्वपूर्ण यथार्थ सजीवित जीवन है । सर्वार्थक होकर ही जीवन सार्थक व मनुष्यों के लिए गौरव का पात्र होता है । (२३७—२३८)

सू० सभी प्रकार से शान्ति ही लक्ष्य हो ।

प्रे० शान्ति ही समस्त संसार में परम लक्ष्य व परमार्थ है । वही मानवों की

सर्वेषु कार्येषु नराश्चरित्रे नृणां तु सल्लक्ष्य-गतैक्यमेत्य ।
तद्-भावनोपेत-सुनिष्ठवृत्ता स्तामेकमात्रां निभजन्तु नित्यम् ।२४०।

सू० एकीभवेन्मति र्गतौ ॥६४॥

प्रे० संनिष्ठ-चित्ताः कृत-निश्चयाश्च संकल्प-धन्या धृत-शान्तिलिप्साः ।
चिन्तानुरूपैश्चरितैश्चरन्तु पृथ्व्यां सुसार्थक्यमभीक्षमाणाः ।२४१।
सत्य-प्रतीतेः स्वत आप्त-सत्त्वे स्वेषां सुसंकल्पित-चर्य-कार्ये ।
एकीभवेत्तत्र मति र्नराणां द्वन्द्वाद्विमुक्ता स्तत एति शान्तिः ।२४२।

[लौकिकत्वाधिकरणम्]

सू० लोक स्त्वयं नर-प्राणः ॥६५॥

प्रे० पृथ्वीयमेवाऽत्र कृते नराणां सैवास्ति तेषां भवनाश्रयश्च ।
सार्थो विशेषाचरणार्ह एव तस्या नराणां च शिरोमणीनाम् ।२४३।

---

भी सेव्य है। भूल जाने पर भी वह वास्तव में मनुष्य जीवन में अपरिहार्य रूप से मानवकर्मों की नियन्त्रण करने वाली है। अतः सभी कर्मो सभी आचरणों में लक्ष्यगत एकता को ध्यान में रखते हुए मानव निष्ठा व दृढ़ भावना से उसकी (शान्ति की) ही सेवा करें। (२३९—२४०)

सू० मति व गति एक हो।

प्रे० मनुष्यों के मन व कर्म एक ही प्रकार हो। चिन्ता के अनुरूप चरित्रों द्वारा ही संसार में मानव सार्थक्य पा सकते हैं। सत्यज्ञान के साथ उचित आचरणों से मन व शरीर दोनों में एकता (एकरूपता) स्थापन करते हुए विरोध-मुक्त होकर मानव शान्ति पा सकते हैं। (२४१—२४२)

सू० मनुष्य ही लोक का प्राण है।

प्रे० यह पृथ्वी मनुष्यों के लिए है, उनके आश्रय व कर्म स्थल है। मानव ही पृथ्वी के शिरोमणि (श्रेष्ठ सम्पद्) है। जीवों के श्रेष्ठ मानवों के

जीवाख्य सृष्टेर्मुकुटाग्ररत्नैः संनीयमाना खलु मानवै स्तु ।
भूरेव भान्यं भुवि सार्थकत्वं नाऽन्यै स्व-सत्वै रवगम्यमानम् ।२४४।

सू० मनुष्य-ज्ञान-तत्परः ॥६६॥

प्रे० संसार एवेह नरै विवेद्य स्तज्ज्ञान-साध्योऽमित-सत्त्वकश्च ।
ज्ञानादतीतस्य न कस्यचिद्वै संसार-मात्रस्य न चास्ति मानः ।२४५।
तस्यैव सत्त्वस्य सुसार्थकत्वं विद्येत लोकै रवगम्यतायाः ।
न स्यात् स ससार इहात्म-सारं विभ्रन्न लोकाधिगतत्व-मुक्तः ।२४६।

सू० मानवार्थोऽयमाधेयः ॥६७॥

प्रे० सर्वै मतः साधुभिराप्तलोकै र्लोकार्थ एवेति भवो गृहीतः ।
ते वै भवस्य प्रजनार्थ-सार स्तत्पालनादेव स सार्थकोऽस्ति ।२४७।
स्यु र्मानवाः स्वात्म-विनाश-यत्नाः क्रमात्स्वयं ध्वंसमवाप्नुवन्तः ।
ध्वस्तेषु तेषु प्रतिपद्यतेऽयं संसार एवाऽभवतां समन्तात् ।२४८।

---

द्वारा पृथ्वी को अपनी सत्ता व व्यवहारों से ही सार्थकता प्राप्त करावे। (२४३—२४२)

सू० यह (संसार) मानव के ज्ञान पर निर्भर हैं।

प्रे० संसार मनुष्यों के अशेष ज्ञान पर निर्भर हैं। ज्ञान के बाहर इसका कोई मान नहीं रहता हैं। संसार की सत्ता व सार्थकता मानवों के ज्ञान से ही निश्चित होती हैं। लोक न हो तो संसार ही अपना अस्तित्व खो बैठेगा। (२४५—२४६)

सू० यह ससार मानव के लिए है।

प्रे० सभी सज्जन विचारक पृथ्वी को मनुष्यों के उद्भव, धारण व पोषण के लिए सार्थक मानते हैं। यदि अपने कर्मों के द्वारा मानव नष्ट हो जाये तो यह भव अभव बन जायेगा (अर्थात् व्यर्थ हो जायेगा)। (२४७—२४८)

## सू० मानव-कर्म-निर्भरः ॥६८॥

प्रे० लोकस्त्वयं मानव-कर्म-सेव्य स्तत्कर्म-पुष्ट स्तदधीन एव ।
हेतु नराणां स्वत आत्मकृत्या श्चोपाय आधार इति प्रसिद्धम् ।२४६।
स्वैर्कर्मभिः सृष्टि-शिरोमणि र्ना स्वौन्नत्यमिच्छु र्भव-मंगलार्थी ।
संसारमेवेह नयेत् स्वभावं कर्माश्रयं तं त्वपि कर्म-गम्यम् ।२५०।

## सू० लोकः सार्थोऽस्ति लोकित्वात् ॥६९॥

प्रे० लोकस्थिते र्वायनुकूलताया लोकाधिवासत्व-सुधर्म-युक्तः ।
लोकेति शब्देन यथाथ-तत्त्वात् संसार एवेह तु बुध्यतेऽयम् ।२५१।
लोकित्वतो लोक इह स्वसत्त्वे स्वभावतो वै पर-धर्मतश्च ।
लोकान् विधृत्यैव च सृष्टि-मुख्यान् संसार्थकोऽयं त्विति साधु-मान्यम् २५२

## सू० धन्यो नरस्य धारणात् ॥७०॥

प्रे० नृणां समुत्पादनत भवाख्यः संसार एषां परिपालनाच्च ।
लोकित्व-युक्ते धृत-सार्थकत्वो धातेति वाच्यो धरणे स धन्यः ।२५३।

---

सू० मानव कर्मों पर ही निर्भर रहता है (भव)।

प्रे० यह लोक (संसार) मानव के कर्मो से सेव्य है उन्हीं से पुष्ट रह कर उन्हीं के अधीन है। मानव के जीवन के आधार व हेतु यही है। सृष्टि के प्रधान मानव जो मंगलार्थी हैं के द्वारा ही यह संसार कर्माश्रय व कर्मगम्य होकर सार्थक बनाया जाता है। (२४६—२५०)

सू० लोक लोगों को धारण करता हुआ सार्थक है। इसी से वह धन्य है। [६९—७०]

प्रे० संसार लोकस्थिति के अनुकुल, लोकवास व लोक–धर्मयुक्त होकर ही लोक कहलाता है। मनुष्यों के रहने के कारण ही स्वसत्ता व स्वभाव के हेतु यह संसार 'लोक' शब्द से परिचित होता है। समस्त सृष्टि के विशेष है

सर्वासु सत्सृष्टिषु सर्वथापि लोका विशिष्ठा भवनार्थ-सारः ।
तान् धारयित्वाऽऽत्म-विभूति-वर्यान् धन्यो भवोऽप्यस्थिर-काम्य-रूपान्
।२५४।

सू० लोकाश्रयाच्छ्रुतिः सार्था ।।७१।।

प्रे० लोकाश्रया वै श्रुतयो नरार्थं तेषां श्रुतेः पालनतश्च नित्याः ।
सार्थक्यमाप्त्वा नर-धर्म-कृत्याः स्युः सविधानात् परमं प्रमाणम्
।२५५।

वेदाः प्रमाणं भव-धर्म-वित्तौ ज्ञानात्म-कर्मस्वपि मानवानाम् ।
लोकार्थताया न हि देवतार्थं लोकाश्रयत्वादिह सार्थकाः स्युः ।२५६।

सू० नीतयो लोक-साधनम् ।।७२।।

प्रे० सर्वाणि शास्त्राणि नृ-साधनानि लोकस्य नीत्यर्थ-पराणि नित्यम् ।
सत्कर्म-धर्मेषु च मानवानां मुख्यं हि सार्थक्यमथाप्नुवन्ति ।२५७।
धर्मस्य शास्त्रं ह्यथ नीतिशास्त्रं ज्ञानं तथा कर्म भुवोऽर्थवत्त्वम् ।
लोकाश्रितत्वान्नर-सेवनार्थं सर्वाणि युक्तानि तु साधनानि ।२५८।

---

मानव, अतः बुद्धि-विवेकवान् मनुष्यों जिनकी देवजन भी कामना करते हैं को धारण करता हुआ यह ससार सार्थक है । (२५१—२५४)

सू० श्रुति (वेद) भी मानवों के आश्रित होकर सार्थक है ।

प्रे० वेद लोकाश्रित है, वे मानवार्थ हैं व उनके पालन से ही नित्य बने हुए हैं । मानव-धम के विधान करते हुए वे प्रमाण व सार्थक हैं । (२५५ — २५६)

सू० नीतियाँ मानवों के ही साधन हैं ।

प्रे० समस्त शास्त्र मनुष्यों के साधन व नीतिसूचक हैं, और उनके सत्कर्म व धर्म के विधान करते हुए सार्थक हैं । धर्मशास्त्र, नीतिशास्त्र, ज्ञान व कर्म ये सभी मनुष्यों के आश्रित होकर उनकी सेवार्थ उचित व सार्थक हैं । (२५७ — २५८)

सू० नराधीनं जगत् सर्वम् ।७३।।

प्रे० सर्वं जगच्चित्रमथेति सत्यं लोकाश्रितत्वादिह पूर्णतेतम् ।
सम्यङ् नराधीनमितश्च नित्यं संगृह्यते सर्व-पदार्थ-विद्भिः ।२५९।
लोकानपेक्षा न च लोक-सत्ता संसार्थका क्वाऽपि कदापि मान्या ।
तद्बुद्धि-कर्माश्रयतां विधृत्य पात्रत्वमेति स्वजनार्थ-कृत्या ।२६०।

कर्माधारो हि लोकानां तत्कृते त्रिषयो मतः ।
भवो भव्यश्च तत्तन्त्र स्तस्यैव नर ईश्वरः ।२६१।
संसारो नर-सेवार्थो नृ-चेष्टाश्रित-सत्तकः ।
नराधीन-स्वरूपोऽयं सूत्र्यते नर-कर्तृता ।२६२।

सू० सर्वेषां नर ईश्वरः ।।७४।।

प्रे० सर्वस्य विश्वस्य नरः सुवेत्ता कर्तापि सोऽयं नर एव तस्य ।
सम्यग् विधाता भवरूपताया स्तस्येश्वरस्यैव तु सेवकोऽसौ ।२६३।
लोका हि विश्वस्य समाश्रितानां जीवाद्यजीवादि-पदार्थकानाम् ।
सर्वेश्वरत्वं परिभोक्तृताया भुञ्जन्त आत्माधिकृतेः स्वशक्त्या ।२६४।

[उद्देश्योपाय-विचाराधिकरणम्]

उद्देश्योपाययो मध्य उद्देश्यं मुख्यमेव तत् ।
अप्रधान स्तथोपायः कृति-मात्रोऽथ सूत्र्यते ।२६५।

---

सू० जगत् मानवाधीन है, मानव सबका प्रभु (मालिक) है। [७३-७४]

प्रे० मानव का आश्रय करके ही सब वस्तु विचित्र, सत्य व पूर्ण हैं। समस्त नराधीन हैं। मानव–हीन अथवा मानवनिरपेक्ष संसार की सत्ता ही व्यर्थ मानी जाती है। मनुष्यों के कर्म का आधार व विषय संसार ही है। यहां तदाश्रित जीवादि व अजीवादि समस्त पदार्थों के प्रभुत्व–निबन्धन व भोक्तृत्व-हेतु आत्म-शक्ति से सभी का भोग मानव ही करते हैं। (२५९—२६४)

उद्देश्य व उपायों में उद्देश्य ही मुख्य है और उपाय अप्रधान है। (२६५)

सू० उद्देश्यात्त इहोपायः ॥७५॥

प्रे० उद्देश्यमेवाऽत्र भवेन्नृ-साध्यमाचार-मात्रे भुवि कल्पिते वा।
मुख्यं नियन्तृ स्वयमाद्य-मान साधुत्व-धातृ प्रिय-कर्मणां नुः ।२६६।
लोकार्थमुद्देश्यमिहेति मुख्यं योग्यो ह्युपाय स्तदधीन एव।
नास्ति स्वतन्त्रः पुनराप्त-सत्तः सोऽयं भवेत्सार्थक आश्रितत्वात् ।२६७।

सू० उपाय स्तदुपायनात् ॥७६॥

प्रे० उद्देश्यार्थ उपायोऽस्ति नान्यथा सार्थकोऽस्तु सः।
स्पष्टमभीप्सित तत्तु सूत्रकारैः समीरितम् ।२६८।
संसाधनत्वं त्वथ धारयित्वोपायस्य साध्य स्तत एनमाप्त्वा।
सेव्योपसेवात्मक-रूपतो वै सम्बन्धत स्तस्य सुसार्थकोऽस्ति ।२६९।
लोकाथ-सेवाकरणादुपायो लोकार्थ-संसाधनतः स धन्यः ।
उद्देश्य-सम्पादन-शक्ति-सत्वो लोकाय लोकाचरितै रुपायः ।२७०।

---

सू० उपाय उद्देश्य के अधीन है।

प्रे० उद्देश्य ही मानव का प्रधान साध्य होता है। चाहे कल्पन (चिन्तन) में हो या आचरण में। वही मानव के प्रिय कर्मो का नियामक व नियंत्रक होता है। उद्देश्य ही लोकार्थ होता है, और साधन व योग्य उपाय उसी के अधीन व अनुकूल, एवं तदाश्रित सत्तावान होकर संसार में सार्थक कहलाते हैं। (२६६—२६७)

सू० उपायन लक्ष्य के उपायन (सम्पादन) हेतु उपाय होते है।

प्रे० उपाय उद्देश्य के निमित्त होते हैं। अन्यथा वे व्यर्थ हैं। यही स्पष्ट रूप से सूत्र बताता है।

उपाय की साधनता को धारण करता हुआ साध्य उसी (उपाय) को आश्रय करके सार्थक होता है। लोकाथ की सेवा करने पर ही लोकार्थक साधन साथक होते हैं। यहाँ साध्य-सेवक का सम्बन्ध है। उद्देश्य की पूर्ति करने की सामर्थ्य रखने वाले साधन ही उचित व सार्थक उपाय माने जाते हैं। (२६८—२७०)

[कर्माधिकरणम्]

सू० बुद्धि–तन्त्रं भवेत्कर्म ॥७७॥

प्रे० कर्मेह बुद्धे रनुगामि नृणां सद्बुद्धितः कर्म भवेत्तु सद्वै ।
बुद्ध्यात्त-कर्मापि च कर्मनोते र्बुद्धि-प्रकाशाय परो ह्युपायः ।२७१।
यत्कर्म सद्बुद्धिमनुप्रयाति स्वाभाविकावेगमबाध-सत्तम् ।
तत्साध्य-रूपं परमं प्रशस्यं लोकैः समाचर्यंत एव सम्यक् ।२७२।

सू० नृ–साध्यं बाह्य–साधनम् ॥७८॥

प्रे० यन्निश्चित वै मनसि प्रसन्ने सद्-बुद्धि-संप्रेरितमेव कर्म ।
आचार-चेष्टं स्वत आप्तशक्ति सत्साधनोपाय-बलं व्यनक्ति ।२७३।
साध्यं नराणां समुपायमोप्सु स्तं वै चिकीर्षु स्त्विह चेष्टमानः ।
सत्यव्रतः सन्नपि चाप्तनिष्ठः सर्वो जनः स्याच् चरिता सदैव ।२७४।

योग्य-साधन-संलभ्या लक्ष्यमुख्या लोकस्य सा ।
शान्ति र्नृणां सदाचारै रिहोदेतीति सूत्र्यते ।२७५।

---

सू० कर्म वुद्धि-तन्त्र हो । मानवोचित योग्य साधन हो । [७७–७८]

प्रे० सद् बुद्धि के अनुगामि कर्म सत् होते हैं । बुद्धियुक्त कर्म भी कर्म-चयन के विवेक का सहायक महान् उपाय बनते हैं । सद्बुद्धि को अनुसरण करता हुआ कर्म (आचरण) धन्य व सबल होकर सत् साधन रूपी उपाय को व्यक्त करता है । साध्य मानव के योग्य उपायों का निरूपण करता है । सभी मनुष्य सत्यव्रत निष्ठावान होकर अनुरूप आचरण करें । (२७१—२७४)

योग्य उपायों के द्वारा ही शान्ति जो मानव का मुख्य लक्ष्य व परम अभीष्ट है प्राप्य है । मानवों के सदाचारों से ही वह प्रतिष्ठित होती है । (२७५)

सू० तस्मिंश्चाप्यनुकूलेऽत्र ।।७९।।

प्रे० योग्येषु संसाधन-चेष्टितेषु लोकैः समस्तै दृढ-सत्य-निष्ठैः ।
संचर्यमानेषु भुवि स्वत स्तल्लक्ष्याग्रगण्योदयमेति शान्तिः ।२७६।
तत्-संगृहीते पर-साधने वै संकल्प-कृत्येषु नरैः समन्तात् ।
आत्मानुकूले चरितेऽथ सम्यग् उद्भूतियोग्या स्थितिरस्तु शान्तेः ।२७७

सू० शान्ति रायातु भूतले ।।८०।।

प्रे० संसाधनेष्वप्यनुसाधितेषु लोकैः समस्तैः परमार्थबुद्ध्या ।
सत्यात्म-निष्ठैः सुविचार-कृत्यै र्लक्ष्याग्र्यसत्ता समुदेतु शान्तिः ।२७८।
सर्वत्र विश्वे नर-जीवितेषु सत्यार्थ-सेवा पर-सच्चरित्रैः ।
लक्ष्याप्ति-संसाधन-चेष्टमानैः शान्तिस्त्ववाप्येत नरै रनन्ता ।२७९।

---

सू० साधन के अनुकूल होने पर संसार में ।

प्रे० योग्य साधनों के लिए लोग सदैव सत्य व निष्ठा के साथ चेष्टा-परायण हो; और सम्यक् तदनुरूप आचरण करने पर ही यहां शान्ति का उद्भव होगा । अच्छे साधन संगृहीत होकर निष्ठावान् मानवों के द्वारा स्वीय चरित्र में अनुकूल ढंग से प्रयुक्त होने पर शान्ति के लिये उपयुक्त स्थिति बनेगी । (२७६—२७७)

सू० शान्ति ससार में आयेगी ।

प्रे० सत् साधन को निष्ठा व ईमानदारी के साथ दृढ़ता से व परमार्थ की बुद्धि से मानवों के द्वारा अपनाने पर ही जीवन के सभी लक्ष्यों का प्रधान जो शान्ति है वह उदित होगी ।

समस्त विश्व में मानव जीवन में सत्यव्रत मानव जब अपने सद् आचरणों से मुख्य लक्ष्य (शान्ति) के लिये प्रयासवान हो तो अनन्त शान्ति उद्भूत होगी । शान्ति ही विशेष रूप से साधनीय है वही समस्त लक्ष्यों का

शान्तिरेव हि संसाध्या सर्व लक्ष्य-शिरोमणिः ।
निष्ठातो मनसो नीत्वा वास्तवीक्रियतां सताम् ।२८०।

सू० कार्यतः सा सदाऽऽधेया ॥८१॥

प्रे० शान्तिस्तु साध्या नर-जीवनेषु सैवैक-लक्ष्यं नरता-विदां वै ।
सेयं च तैः साध्यत एव सम्यक् सर्वत्र पृथ्व्यां क्रियतां तु मूर्ता ।२८१।
शान्तिं तथाऽऽद्यैक-परार्थ-रूपाम् अभ्यास-साध्यामनुसाधयन्तः ।
सवास्तवीकुर्यु रिहैव लोकाः सर्वार्थ-सिद्धित्वमुपेप्सवश्च ।२८२।

सू० निश्चिता साधुभि र्नरैः ॥८२॥

प्रे० सर्वत्र सर्वैरिह सर्वदैवं सद्भि र्नरैः सर्वत एव सत्यम् ।
संनिश्चिता मुख्य-सदर्थ-रूपा शान्तिः समन्तादविवादितेयम् ।२८३।
सैवेह सर्वैरुपपादितव्या सर्वत्र लोके नृषु तत्समाजे ।
सर्वात्मिकाऽप्यान्तर-वाह्य-रूपा मुख्यार्थं एवाऽस्तु भवार्थ-वत्त्वम् ।२८४।

प्रतिष्ठाप्यात्र सर्वैः सा शान्तिः सत्य-स्वरूपतः ।
सर्वत्र विश्व-लोकेषु मुख्यार्थं इति सूच्यते ।२८५।

---

शिरोमणि है । अतः मन की निष्ठा से इसे स्वीकारते हुए चेष्टाओं के द्वारा मानवों को इसे वास्तवीकृत करना चाहिए । (२७८—२८०)

सू० कार्यों से उसे (शान्ति को) प्रतिष्ठित करना चाहिये ।

प्रे० शान्ति ही मानव जीवन में चरम लक्ष्य है अतः मानवता को मानने वाले सभी मनुष्यों को अपने कर्म, विचार व निरन्तर प्रयासों द्वारा उसे स्थापित करना चाहिए, उसी से ही सबका जीवन सार्थक होगा । (२८१—२८२)

सू० यह सज्जनों द्वारा निश्चित है ।

प्रे० सभी स्थान के सज्जन व विचारशील लोग इस सत्य को जानते हैं। सर्वत्र शान्ति स्थापित हो जो मानवों का मुख्य लक्ष्य है, वे वैसे प्रयत्न करें । आन्तरिक व वाह्य साधनों का सही उपयोग करके शान्ति को वास्तव स्वरूप में प्रतिष्ठित करें तभी संसार सार्थक व धन्य होगा । इसी बात को जोर देते हुए फिर से प्रस्तुत किया जा रहा है । (२८३—२८५)

सू० कल्प्यते चेन्न, मूर्ता स्यात् ।।८३।।

प्रे० नित्या त्वभंगाऽनवधि स्तु शान्तिः संसाध्यमानात्र चिरस्थिति वैं ।
सत्कल्पिता चापि मनस्यनन्या सवास्तवीकार्यत एव सद्भिः ।२८६।
सामान्य-लोका महतां जनानां सम्यक् चरित्रैरनुवर्तमानाः ।
संस्थापयन्त्येवमिमां क्रमांच्च सर्वत्र शान्तिं नर-जीवनेषु ।२८७।

सू० सर्व-संसार-पालिनो ।।८४।।

प्रे० सा सर्व-संसार-सुपालिनी वै अशान्ति-मात्रस्य विरोधिनी च ।
लोकाश्रयः सार्थकता-विधात्री लोकार्थ-रक्षार्थ-समुन्नतिभ्यः ।२८८।
साम्यात्म-बुद्धेः सरलत्व-सत्य-प्रेमाऽविरोधात्त-कृति-प्रभा सा ।
निष्ठात आप्याऽस्तु सचेष्ट-सर्वैं निस्तारिणी विश्व-विनाश-राशेः ।२८९।

नृणां भव्यः परार्थं श्च सर्वं भूतल-वासिनाम् ।
याथार्थ्या च्चेष्टमानै स्तु साप्तव्येहेति सूच्यते ।२९०।

---

सू० केवल कल्पना में रखा जाये ? नहीं उसे मूर्त रूप देना है ।

प्रे० नित्य व अविच्छिन्न शान्ति ही साध्य है । इसकी शुभ कल्पना को मन में दृढ़ रखकर अनुरूप आचरण व चरित्र द्वारा अनुवर्तन करके वास्तवीकृत करना है । और क्रमशः इसी तरह शान्ति को मानव जीवन में स्थापित करना है । (२८६—२८७)

सू० समस्त विश्व की पालन कारिणी यही है ।

प्रे० यही विश्व की पालनकारिणी व सार्थकता की विधात्री है और लोगों की रक्षा व उन्नति करनेवाली है । साम्यबुद्धि, सरलता, प्रेम व अविरोध आदि से युक्त आचरणों द्वारा निष्ठावान् मानव विश्व को विनाश से बचानेवाली इस शान्ति को स्थापित करें । (२८८—२८९)

मानवों का श्रेष्ठ व मनोरम उद्देश्य संसार में शान्ति ही है । यथार्थ तत्त्व को मानने व पाने के इच्छुक उसे प्राप्त कर सकते हैं । (२९०)

[आप्यत्वाधिकरणम्]

सू० साऽऽप्यतां सर्वतो लोके ॥८५॥

प्रे० शान्तिर्यथार्था परिपुष्ट-सत्ता संभाविताप्येवमिहाप्यमाना ।
मूर्तायमाना क्रियतां समन्तात् सर्वत्र विश्वेऽर्थवरो जनै र्वै ।२९१।
कार्ये मनःस्वेव भुवो नराणाम् आचार-वित्तिष्वपि पूर्ण-सत्ता ।
बाह्ये भवे चैव तदात्म-चर्यैः सर्वत्र लोकैः सुविधीयतां सा ।२९२।
दीर्घस्थितिश्च या शान्ति र्लोकेष्वभिन्न-सत्तका ।
सम्यगाप्येत सर्वैः सा तदेव सूत्र्यते पुनः ।२९३।

सू० नित्यमभिन्न-सत्वका ॥८६॥

प्रे० स्थायि-स्थिताऽच्छेदवती समग्रा सा निश्चिता शान्तिरितः समृद्धा ।
अन्त-च्युताऽभिन्न-समर्थ-सत्ता भात्वेव सर्वत्र मनुष्य-सेव्या ।२९४।
साऽखण्ड-सत्ता परमार्थ-नित्याऽनन्त-द्युतिः सार्थकतां भुवश्च ।
नृणां च पूर्णत्वमथादधाना संराजमानाऽस्तु नरैश्च साक्षात् ।२९५।
[सार्वजनीनत्वाधिकरणम्]

---

सू० वही विश्व में सभी नरके प्राप्तव्य है ।

प्रे० यथार्थ, पुष्ट-सत्ताक शान्ति संभावित व प्राप्तव्य है और मूर्त व वास्तव बनाये जाने के योग्य है । इसीलिए सभी नर कार्य, मन, आचार, ज्ञान विचार आदि से परिष्कृत लक्ष्य शान्ति को स्वीकारते हुए सर्वत्र, सत्साधनों से उसे प्राप्त करने में निरंतर यत्नशील होवे जिससे संकल्पित शान्ति बाह्य जगत् में प्रतिष्ठित हो सकें, और समान रूप से सर्वत्र स्थायी हो इसी बात को पुनर्वार जोर देते हुए दोहराया जाता है । (२९२–२९२)

सू० नित्य वह एक सत्ता वाली हो ।

प्रे० स्थायी व च्छेदहीन निश्चित समग्र शान्ति ही यहां परम काम्य है । अतः उसी अनन्त व मंगलमय सत्ता वाली की सभी सेवा करें ताकि मानव की पूर्णता व संसार की सार्थकता हो । (२९४–२९५)

सू० संस्थाप्या भुवि संसाध्या ।८७।

प्रे० शान्तिः समाराध्यतमा नराणां सैवार्जनीया भुवि सर्वतश्च।
लोकार्थ-मुख्या चरितै विचारैः सार्थक्य-पूर्णत्वमभीप्सुभिस्तु ।२९६।
श्रेष्ठानुसाध्यैव सतीह शान्तिः सेव्या च सर्वैं वरणीय-सत्ता।
लोकैर्यथार्थं ह्यनुचेष्टमानै रानीयतां मर्त्यं इतोऽमृतत्वम् ।२९७।
वस्तुतः शान्तिरेवेह मूर्ता स्यात् सर्वतः स्थिरा।
कार्यतेऽच्छेद-सत्त्वेति सूत्र्यते तदतःपरम् ।२९८।

सू० शान्ति र्मूर्ताऽस्त्वचंचला ।।८८।।

प्रे० रूपे नरै र्वास्तव एव नेया शान्ति र्ह्यपूर्वा भुवि चाप्तसत्ता।
मूर्तैव सम्यक् प्रतिभातु नित्यं संसेव्यमाना सकलार्थ-सारः ।२९९।
सुष्ठु स्थिराऽस्तु स्थिति-संविधात्री लोकस्य सर्वस्य भुवः प्रतिष्ठा।
शान्तिः स्वतो वै नर–साध्यमाना सर्वप्रकारैः शुचिसाधनैश्च ।३००।
सर्वैः संसेव्यमानेयं वाक्-काय-धी मनो-बलैः।
विचारैः संप्रचारैश्च सार्थकाचार–कर्मभिः ।३०१

---

सू० वही संसार में स्थापनीय व साधनीय है।

प्रे० मानवों का आराध्यतम सेव्य वही है जिसे वे अर्जन करें। लोकार्थक विचार व आचारों के द्वारा वे उसी वरणीय की सेवा करें तथा निरन्तर यत्नशील होकर उस अमृत को इस मर्त्यलोक में लावें। (२९६-२९७)

वास्तवरूपसे शान्ति को विश्व में मूर्त व स्थिर करके स्थापित किया जाय। इसी पर सूत्र प्रस्तुत है।

सू० शान्ति मूर्त व अचञ्चल हो।

प्रे० शान्तिको वास्तव रूप में सत्तावान् बनाया जाय व सदैव इस की सेवा की जाय क्योंकि यही परमार्थ है यही संसार की प्रतिष्ठा, उसकी रक्षा व त्राण करने वाली है। अच्छे उपायों के द्वारा उसे संस्थापित किया जाना चाहिए। उन उपायो में वाक्य, बुद्धि, विचार संकल्प व आचार–प्रचार सभीको

अर्जितव्येयं मुख्यैव जीवनार्थ-विधायिनी ।
प्रयासोऽतः सदा कार्यस्तत्प्रतिष्ठापनं प्रति ।३०२।

सू० यथार्थ-बुद्धि-सेवातः ॥८९॥

प्रे० सेवाऽप्यसारो भवतीह नृणां सद्बुद्धि-सेवात्मक-कर्मणां वै ।
तेभ्यः स्वतः शान्ति रुदेति नित्या लोकात्म-सार्थक्यमुपादधाना ।३०३।
अस्वार्थ-बोधात् समभावनायाः सेवात्मकैः कर्मभिरेव लोके ।
साम्याविभेदात्त-विवेक-चारैः संस्थाप्यतामिष्टतमैव शान्तिः ।३०४।

सू० लोकेऽहिंसाऽत्र चर्यताम् ॥९०॥

प्रे० लोकक्रियायामपि तद्-विचारे सत्यव्रतत्वेऽप्यनुभावितत्वे ।
संचेष्टमानेषु नरेषु तस्यै तद्योग्यतायाः स्थितिरस्तु योग्या ।३०५।
श्रेष्ठे ह्युपाये विहिते समन्तात् सर्वै र्नरैरेव सुशिक्षितैश्च ।
सर्वार्थ-बोधात्मप्रयास-युक्तै रानीयतामत्र च भुज्यतां सा ।३०६।

---

लगाना चाहिए। ये सभी सहायक हैं इसी को प्राप्त करना जीवन का परमार्थ है। प्रयासों व कर्मों से इसे स्थापित करना चाहिए। (२९८–३०२)

सू० यथार्थ बुद्धि से सेवा करने पर।

प्रे० सद्बुद्धि से प्ररित सेवा ही एकमात्र आशु कार्य हैं। उसी से लोगों की सार्यकता सम्पादन करने वाली शान्ति उदित होती है। स्वार्थ–बोध छोड़कर समता की भावना से सेवात्मक कर्मों द्वारा भेद–रहित विवेक व आचारों से यहाँ शान्ति को स्वापित करना चाहिए। (३०३–३०४)

सू० संसार में अहिंसा का आचरण करना चाहिए।

प्रे० मानव सत्यव्रती व कल्याण-कर विचार के अनुसार योग्यता के साथ चेष्टापरायण होनेपर योग्य स्थिति उत्पन्न होती है। इसी प्रकार शिक्षित भी मनुष्य श्रेष्ठ उपायों के बलपर निरन्तर प्रयास करते हुए शान्ति को संसार में उपस्थित व स्थापित करें। (३०५–३०६)

शान्ति स्तु चरमं लक्ष्यमात्रात-लोक-जीवने ।
तस्याः प्राप्तेरवान्तर फलं किंचिदथोच्यते ।३०७।

[फलाधिकरणम्]

सू० तदाप्तौ परमार्थाप्तिः ॥६१॥

प्रे० तस्या हि शान्ते रधिलिप्सवश्च सर्वत्र लोकाः स्वबलं स्वशक्तिम् ।
संसाधनेऽस्याः विनियुक्त-वन्तः सर्वन्तु सार्थक्यमथाप्नुवन्ति ।३०८।
तत्प्राप्तवद्भि नितरां मनुष्यैः संसेवकै स्तत्प्रतिपादकैश्च ।
सर्वार्थ-सारः परमार्थ आस्तां योग्य-प्रयासैरिह नून माप्तः ।३०९।

सू० अभावे सर्व-दीनता ॥६२॥

प्रे० शान्तेरभावे भुवि मानवानां हिंसा-विनाशाद्यपकार-भीतिः ।
सर्वप्रकारं समुपैति दैन्यम् अन्याय-भारै रभिघातजं च ।३१०।
तस्या अभावे खलु वर्तमाने सर्वत्र पश्याधुनिके भवेऽपि ।
लोका स्तथा तत्सुपिपासयार्ता मज्जन्ति भूयश्चिर-दुःख-सिन्धौ ।३११।

---

मनुष्य-जीवन में शान्ति ही चरम और परम लक्ष्य है इसके साथ और भी कुछ आनुसंगिक जीवनोपयोगी उपलब्धियां होती हैं (३०७)

सू० उसकी प्राप्ति ही परमार्थ की प्राप्ति है।

प्रे० शान्ति की प्राप्ति के इच्छुक सभी लोग अपने बल व शक्ति को ठीक ढंग से प्रयोग में लेते हुए उसको साधते हुए सार्थकता प्राप्त करेंगे। उसी को प्राप्त करनेवाले प्रतिपादक योग्य प्रयास व आचरणों से सर्वोत्तम लक्ष्यसार स्थापित करेंगे। यह निश्चित है। (३०८-३०९)

सू० (उसके) अभाव में ही समस्त दीनता है।

प्रे० इसके अभाव में मानवों के हिंसा व विनाश का भय एवं सभी प्रकार दैन्य व अन्याय संसार में उपस्थित होते हैं, यह प्रत्यक्ष सत्य है। इसके अभाव में वर्तमान विश्व में लोग इसकी आकाङ्क्षा मन में लेते हुए भी सदा दुःखसागर में मग्न होते रहते हैं। (३१०-३११)

सू० सेवायां सम्पदः सर्वाः ।।९३।।

प्रे० तत्सेवने यान्ति नराः पृथिव्यां श्रद्धासमृद्धे परमार्थकामाः ।
तस्या अमोघा शुभ-सम्पदश्च याभिः सुसाफल्यमथाप्नुवन्तु ।३१२।
निष्ठात एवेह नरा भजन्तः शान्तिं परार्थं भुवि मानवानाम् ।
सत्यव्रताः साधव आप्नुयु स्तल्लोकार्थ-सिद्धिं पर-सम्पदां वै ।३१३।

सू० पूर्णत्वं तदुपार्जने ।।९४।।

प्रे० तस्याः पृथिव्यामधिवेशितत्वे सर्वेषु लोकेषु तथा नृजातौ ।
पूर्णत्वमायाति परं परत्व लोकस्वरूपे नरजीवनेषु ।३१४।
शान्तेः प्रतिष्ठैव नृ-सार्थकत्वं मूर्ता दधातीह ततः स्वभावात् ।
नाशार्ति-दैन्येभ्य उपेत्य मुक्तिं नित्यं नृणां वै परिपूर्ण सत्ता ।३१५।

सू० अकामाच्चाप्त-कामत्वम् ।।९५।।

प्रे० निर्लोभताया स्तदकामताया लोकेषु शिष्टेषु च साधकेषु ।
शान्तेः परार्थस्य सदा स्वतश्च पूर्णाप्त-कामत्वमतो ह्युदेति ।३१६।

---

मू० (इसकी) सेवा में समस्त सम्पद् उपस्थित होतीं है ।

प्रे० इसकी श्रद्धापूर्वक सेवा में नर समस्त सम्पद् व सार्थकता प्राप्त करते हैं । निष्ठातूर्वक शन्ति को भजते हुए सत्यशील सज्जन मानव सांसारिक जीवन की ऋिद्धि व परम सम्पद् प्राप्त करते हैं । (३१२ ३१३)

सू० इसके उपार्जन से ही जीवन की पूर्णता है ।

प्रे० शान्ति प्रतिष्ठित होने पर समस्त विश्व व नरजीवन में पूर्णता होती है । शान्ति की प्रतिष्ठा ही मनुष्यों की सार्थकता, और वही विनाश-दुःख आर्तों को नष्ट करने वाली है एवं संसार को उनसे मुक्त करने वाली है । (३१४-३१५)

सू० कामना (स्वार्थपरता) रहित होने से ही मानव आप्तकाम होताहै ।

प्रे० निर्लोभ व निष्काम भावना से विश्व में लोगो में श्रेष्ठ लक्ष्य

तत्सर्वतश्चापि तु शान्ति-लाभे आचार-बोधैश्च भवे नराणाम् ।
निःस्वार्थतातोऽप्यनुवर्तनानां नित्याप्ति-कामत्वमथ प्रभाति ।३१७।
लाभे हि शान्तेः सकलार्थ-गत्याः धर्मार्थ-कामाश्रय-मोक्ष-धात्र्याः ।
यत्रेह नृणां प्रविशन्ति कामाः सर्वे तु लोके तदकामता स्यात् ।३१८।

सू० तादर्थ्यं जीव-जीविते ।।६६।।

प्रे० लक्ष्योत्तमायां भुवि साधितायां स्वात्मार्थवत्त्वं नरजीवितस्य ।
सर्वैर्नरैरात्त-सुयत्न-रत्नैः सत्य-स्वरूपत्वमथाप्यते च ।३१६।
लोकस्य सत्ता भव-शान्ति-लक्ष्या सर्वं तदाधारमिहास्ति जातम् ।
तद् भूतिमंगे परमाविधाय तादर्थ्यमाप्नोतु च सार्थकत्वम् ।३२०।

सतर्कीकरणायैव विरुद्ध-चेष्टितस्य तु ।
कुफलं ध्वंस-मूलत्वमित्यत्र सूत्र्यते पुनः ।३२१।

---

शान्ति का उदय होता है । अतः आचार व बुद्धि-विचारों में लोग संसार में स्वार्थशून्य होकर सर्वात्म भाव से शान्ति को स्थापित करें इसकी प्राप्ति में ही समस्त कर्म व गति सार्थक होती हैं । और समस्त कामना व आशा इसी में समाई हुई हैं । (३१६-४१८)

सू० जीवों के जीवन में सार्थकता आती है ।

प्रे० मानव जीवन के सर्वोत्तम लक्ष्य शान्ति संसार में उपस्थित होने पर जीवन व विश्व की सार्थकता स्वतः ही मानथ प्राप्त कर लेंगे ? मानव की सत्ता ही शान्ति को लक्ष्य में रखकर वर्तमान है, वही जीवन का आधार है, जगत की स्थिति भी उसपर निर्भर है । उसके होने पर ही समस्त सांसारिक विभूतियां धन्य होती व सार्थक्य-युक्त होती है ।

इसके विपरीत चेष्टाओं के सम्भावित कुफलों के लिए सतर्कीकरणार्थ पुनः सूत्र प्रस्तुत हैं । (३१६-३२१)

सू० ध्वंसोऽस्तु द्वेष-लोभाभ्याम्। ।९७।।

प्रे० लोभात्तथा द्वेष-बलान्नराणां ध्वंसं ह्यु पैतीह परं नृलोकः।
तद्वारणायाऽथ सदा नराः स्युः सचेष्टमाना मति-कर्मभिश्च ।३२२।
हिंसात्मनाशे त्वनिवार्य-हेतु र्लोभात्तथा द्वेष इहोपजातः।
अन्येऽपि सर्वे ह्यपकारकाश्च दोषाः प्रजायन्त इति प्रसिद्धम् ।३२३।

सर्व-सार्थक्यमाप्नोति लोको वै शान्तियोगतः।
तस्याः प्रशंसनात्सूत्र-त्रयमन्त्यमुदीरितम् ।३२४।

सू० शान्तौ स्यात् सर्व-सार्थता ।९८।

प्रे० सार्थक्यमाप्नोतु भवो नराणाम् आत्म-स्वभावं परमाप्य सत्यम्।
शान्तेः प्रभावाच्चिरमेव तत्स्थः स्याज्जीवनं नित्यमवाध-खण्डम् ।३२५।
सञ्जीवनीं शक्तिमपूर्व-सत्तां शान्ति र्भवेत् सर्वत आदधाना।
लोकार्थ-साफल्यमतो नराणां सम्यग् विधायैव समृद्ध-सत्ता ।३२६।

---

सू० द्वेष व लोभ से ध्वंस होता है।

प्रे० लोभ व द्वेष से अपने बल की हानि बनाकर मानव संसार में ध्वंस-प्राप्त होते हैं, अतः उसके वारणार्थ सब लोग सर्वथा प्रयासवान् रहें। हिंसा आत्मविनाश का अनिवार्य कारण है। लोभ से ही द्वेष उत्पन्न होता हैं। शान्ति के संयोग से सर्व-सार्थकता होती है। इसी बात पर शान्ति की प्रशसा में तीन अन्तिम सूत्र प्रस्तुत हैं (३२२-३२४)

सू० शान्ति के उदय से ही सर्वसार्थकता है।

मानव अपने व पराये सार्थक्य प्राप्त करेंगे और शान्ति के प्रभाव से चिरकाल अबाध व अखण्ड स्वस्थ जीवन भोग करेंगे। शान्ति सर्वत्र अपूव सत्तावाली संजीवनी शक्ति बिखेरती हुई सभी के कल्याण व सार्थकत्व का विधान करती है। (३२५-३२६)

सू० तत्सिद्धौ पूर्णताः सर्वाः ॥९९॥

प्रे० अन्योन्यमेवात्र सहानुभूत्या सद्बुद्धि-चेष्टाभियुतै र्नरैस्तु ।
शान्तेरथोत्पत्तिरबाधितार्ऽपि ससाध्यतां वै ध्रुवमाप्तमूर्तिः ।३२७।
संसाधितायामिह नित्य-शान्तौ सर्वात्म-कल्याण-सुपालिकायाम् ।
याथार्थ्यमाप्नोति भवश्च जीवः संजीवनाच्चैव सलोकताताः ।३२८।

विरोध-द्वेष-नाशेभ्यो दुःखेभ्यश्चैहिकं जगत् ।
मुक्तञ्च शान्तिमयत्वादादर्शभूरिहोच्यते ।३२९।
ऐहिक-जगतो लक्ष्य शान्तिमुपेत्य तद्भवः ।
सर्वथा प्रीतिपूर्णोऽन्ते स्वर्गवत् सप्रशस्यते ।३३०।

सू० पृथ्वी स्यात् सुर-वासवत् ॥१००॥

प्रे० संसार इत्थं चिर-शान्ति-पूते सञ्जीविताः स्युः पुनरार्तिशून्याः ।
सर्वेऽपि जीवा अथ मानवाश्च निश्चिन्ततया भय-नाश-मुक्ताः ।३३१।

---

सू० उसकी सिद्धि से समस्त पूर्णता है ।

प्रे० परस्पर सहानुभूति व सद्बुद्धि के साथ निरन्तर चेष्टा करने वाले मानव शान्ति को अबाधित व अखण्ड रूप से मूर्त करें । नित्य शान्ति जो सर्व-कल्याण व पालन में समर्थ है साधित होने पर जीव व संसार सार्थक होंगे । विरोध, द्वेष व विनाश से मुक्त शान्तिमय जगत् आदर्श पृथ्वी कहलायेगा । ऐहिक जगत के श्रेष्ठ लक्ष्य शान्ति को पाकर संसार सर्वथा प्रीतिपूर्ण व सुखमय स्वर्गवत् प्रशंसित होगा । (३२७-३३०)

सू० पृथ्वी स्वर्गतुल्य हो जायएी ।

प्रे० संसार स्थिर-शान्तियुक्त विशुद्ध व क्लेश-रहित होगा । समस्त जीव व मानव निश्चित रूप से भय व विनाश से मुक्त होंगे । लोग शान्ति के साथ

देवा इवेह प्रभवन्ति लोकाः शान्त्या भवे पावनताभिभूते ।
धन्ये विशुद्धे गत-संशयत्वाद् दिव्य-स्वभावोऽप्यनुभूयतां तैः ।३३२।
सर्वस्य सर्वस्वमितो भवेत्तत् सर्वैस्तु सर्वं सममर्चनार्हम् ।
निःस्वार्थ-लोभैः पर-सेवकैश्च भूः सार्थकैः स्यात् सुर-भूत्वमेता ।३३३।
सन्त्यत्र पृथ्व्यां बहवो वरेण्या आचार-बुद्ध्या भवशीर्ष-रत्नम् ।
नृन् ते प्रबोधाय दिशन्तु सर्वान् शान्तेः प्रतिष्ठाऽस्त्विह लोक-साध्या ३३४
स्यादत्र कुत्रापि सदात्म-वेद आचार-बोधैः पर-लक्ष्य-चित्तः ।
एकोऽस्ति पूज्यः स नरैर्महात्मा शान्तेर्विधाता य उपास्यमानः ।३३५।
अन्ये च सर्वे परिपालयन्ति तस्यैवमाज्ञामनुरूप-सत्ताम् ।
तस्माद् भवे संपरिवर्तिते वै शान्तिप्रभावोऽस्त्वनुधावनीयः ।३३६।
लोकाश्च सर्वे क्रमशो यतन्तां सत्याश्रिता वै सुविचारवन्तः ।
निःस्वार्थ-लोभाः सरलत्व-शोभाः प्रेमाप्लुताः सत्कृतिमाचरन्तः । ३३७।
श्रीराम-कृष्णावपि खृष्ट एव मोहाम्मद श्चापि जिनश्च बुद्धः ।
गांधी च चैतन्य इतोऽपि सर्वे प्रेमात्म-शान्तिं समुपादिशन्ति ।३३८।

---

रहकर दिव्य-स्वभाव के बल पर देवतुल्य माने जायेंगे। सबकी सम्पद् सबकी मान्य होगी जब सब लोग स्वार्थ व लोभ से रहित होकर परसेवक व सर्वप्रेमी बनकर आचार-विचारों से पूज्य व सृष्टि के शिरोमणि माने जायेंगे। सज्जन सर्वोदय व विश्वोन्नति के लिए उपदेश व प्रचार करते रहेंगे। यदि वैसा सज्जन महात्मा आचार व बोध से लक्ष्यपरायण हो शान्ति के साधन में निरत रहे तो वह भी सर्वपूज्य होंगे। (३३१-३३५)

और अन्य सब लोग उनकी आज्ञा के अनुवर्ती होकर क्रमशः इसी प्रकार काय-मन-वाक्यों से शान्ति को साधें और सत्याश्रित व यथार्थ निष्ठा के साथ निःस्वार्थ व सरल प्रेमी एवं सत्कृति-युक्त होकर इस साधन में लगे तो वे संसार के गौरव माने जायेंगे। तब यह क्षुद्र पुस्तक सार्थक हो जावेगी। संसार में जैसे श्रीराम, श्री कृष्ण, खृष्ट, मोहम्मद (जिन) महावीर, बुद्ध,

शान्ते यथार्थं ह्यनुसाधका स्तु लोकास्तथा केऽपि भवस्य गर्वम्।
स्यु र्बोधकृत्यंश्च विशेष-निष्ठा ग्रन्थोऽयमाप्नोतु ततोऽर्थवत्त्वम् ।३३९।
आशाऽस्ति मेऽप्यत्र जनै र्महद्भिः सद्बुद्धिभिः साधुचरद्भिरद्य।
ग्रन्थोऽयमेवापि सुतुच्छतेतः संवीक्ष्यतां साधु विचार्यतां च ।३४०।
चेत्साधवः केऽपि पठन्ति चेमं संचिन्तयन्त्यग्रत आचरेयुः।
शान्ति-प्रमीमांसित-मुख्य-सत्वो ग्रन्थस्तदा स्याद् बहुमन्यमानः ।३४१।
किंवाऽपठन्तोऽप्यनुचिन्तयन्तः स्वयं स्वभावादिह सत्य-सन्धाः।
सत्कर्मभि श्चैवमथाचरन्ति विश्वस्य शान्त्यै भुवि सार्थकः स्याम् ।३४२।

सद्बुद्धि-प्रेरितेनात्र विश्व-कल्याण-कामिना।
सर्वथावश्यक ञ्चापि हेलितं शान्ति-दर्शनम् ।३४३।
नृहिताय च संक्षेपं तत्कृते रच्यते मया।
उपाह्व-पुरकायस्थ-द्विजेद्रलाल-शर्मणा ।३४४।

---

गांधी, चैतन्य आदि सभी महात्मा युग युग में यही उपदेश देते रहे हैं। मेरी आशा है, सज्जन व विचारशील कृतिमान् मानव इस क्षुद्र व तुच्छ पुस्तक को ध्यान से पढ़ेंगे और इसी दिशा में विचार कर आगे के कदम बढ़ायेंगे। (३२६-३४०)

शिक्षित व साधूजन इस ग्रन्थ को पढ़ेंगे और आगे विचार पूर्वक आचरण करके जीवन के मुख्य लक्ष्य शान्ति के लिए यत्नशील होंगे तो प्रस्तुत ग्रन्थ सफल माना जायगा। किंवा इसे न पढ़ते हुए भी कुछ लोग स्वयं स्वभाव से ही इसी दिशा में विश्व-कल्याण की भावना से शान्ति के लिए प्रयासवान होंगे तब भी मैं धन्य हो जाऊंगा। सद् बुद्धि व विश्व-कल्याण की भावना से प्रेरित होकर मानव-हित के लिए ही यह सर्वथा आवश्यक व युगोपयोगी परन्तु उपेक्षित

प्रेमाख्य-भाष्य-संयुक्तं विश्वार्थं शान्ति-दर्शनम् ।
ततस्तेभ्यः सुखं पूर्णमुद्दिश्येदं समर्प्यते ।३४५।
मालिन्यमस्ति यत्त्वत्र सर्वं तद्दैन्यजं मम ।
यदि स्याद् गुणलेशोऽपि सर्वथा स सतां मुदे ।३४६।

॥ सम्पूर्णमिति शान्तिद–र्शनम् ॥
तथा चात्र प्रेमभाष्यमपि समाप्तम् ।
ओम् शान्तिः शान्तिः शान्तिः ओम् ।

---

शान्ति-दर्शन मैं (द्विजेन्द्र लाल शर्मा पुरकायस्थ) ने यथा-सम्भव संक्षेप में यहां प्रस्तुत करने का प्रयास किया। अतः यह प्रेमाख्य भाष्य–युक्त यह शान्ति-दर्शन समस्त मानवों को ही सादर समर्पित है ताकि इसका उद्देश्य पूरा हो।

इसमें जो कुछ मलिनताएँ हैं वे सभी मेरी दीनता व कमी के सूचक हैं और यदि कुछ थोड़ा सा गुण भी पाया जाय तो वह सब सज्जनों का ही है।

सर्वत्र शान्ति हो।

॥ ग्रन्थ समाप्त है ॥

